श्रीशेषकृष्णकृता

# प्राकृत-चन्द्रिका

स्वोपज्ञवृत्तिसहिता ]

वा० संस्कृतविश्वविद्यालयीय-
ग्रन्थाध्यक्षवरैः
श्रीसुभद्रोपाध्यायैः
संशोधिता



सम्पादकः
श्रीप्रभाकरझा



एकमात्र वितरक
भारतीय विद्या प्रकाशन
पो० बा० १०८
वाराणसी ( भारत )

# ग्रन्थसंशोधयितुर्निवेदनम्

भगवतो विश्वनाथस्य कृपया शेषकृष्णकृता सटीकेयं प्राकृतचन्द्रिका पञ्चाना कोशाना साहाय्येन विदुषांपुरत समुपस्थाप्यते। तत्र द्वौ कोशौ पुण्यपत्तनस्थ भाण्डारकर–अनुसन्धानीय ग्रन्थालयस्य विद्येते, त्रयश्च वाराणसेय-संस्कृतविश्वविद्यालयस्य सन्ति। ग्रन्थेऽस्मिन् विभिन्नकोशस्थपाठ–भेदाना सारिणीम् अनेकेभ्य हेतुभ्य उपस्थापयितुमक्षम क्षमा याचते

श्रावण कृष्ण-सप्तम्या
२०२४ सम्यकसंवत्सरे
वाराणस्याम्

—सुभद्रोपाध्यायः

प्राकृतचन्द्रिकायाः

# प्रकाशक्रमः

# प्राकृत-चन्द्रिका

## प्रथमः प्रकाशः

अलिकुलमण्डितगण्डं प्रत्यूहव्यूहतिमिरमार्तण्डम् ।
सिन्दूरारुणशुण्डं देवं वेतण्डतुण्डमवलम्बे ॥१॥
कलितकमलपुस्तन्यस्तहस्ताग्रमुद्रा
विशतु लिखनसिद्धिं शारदा सारदा नः ।
प्रतिवदनसरोजं या कवीनां नवीना ५
वितरति मधुधारा माधुरीणां धुरीणाम् ॥२॥
श्रीनृसिंहगुरोर्नत्वा पदपङ्कजतल्लजम् ।
विशदार्थां शिशुहितां कुर्वे प्राकृतचन्द्रिकाम् ॥३॥
प्रकृतिः संस्कृतं तत्र भवत्वात्प्राकृतं स्मृतम् ।
तद्भवं तत्समं देशीत्येवमेतत् त्रिधा मतम् ॥४॥ १०
प्रकृतिप्रत्ययांशाभ्यां विकृतं तद्भवं यथा ।
गोरीआ देउसो हग्ग सामिद्धि पाअडं स्मृतम् ॥५॥
यत्केवलं प्रत्ययांशे विकृतं तत्समं यथा ।
हरिणो चरणे चारु नुमो कमलकोमले ॥६॥
देशी देश-विशेषेण प्रयुक्तमपरिस्फुटम् । १५
यथा हल्लो हलं हालः कदोट्ट समं उप्पवम् ॥७॥
तेषु देश्यं निरूढत्वात् स्वतन्त्रत्वाच्च लक्षणम् ।
नापेक्ष्यतेन्यभाषावत् संप्रदायोस्य बोधकः ॥८॥
संस्कृतप्राकृतोक्ताभ्यां लक्ष्याभ्यां विद्धि तत्समम् ।
अतस्तद्भवमेवैकमिह लक्ष्यतया स्थितम् ॥९॥ २०
तत्रार्षं मागधी शौरसेनी पैशाचिकी तथा ।
चूलिकापैशाचिकं चापभ्रंशेति षड्विधम् ॥१०॥
एषां कार्यविशेषेण भेदोग्रे स्फुटयिष्यते ।
शेषं संस्कृतवत्सिद्धं प्रकृतिप्रत्ययादिकम् ॥११॥
महाराष्ट्रोद्भवां भाषां प्रकृष्टं प्राकृतं विदुः । २५
आकरः सूक्तिरत्नानां सेतुबन्धादि यन्मयम् ॥१२॥

ऐ-औ-ᳵक ᳶ प-ॠ-ऋ लृ-ॡ-लुतशषाः सर्गाः ।
चतुर्थी भ्यसि प्रान्ते हल् ङ्ञनाः पृथग्द्विवचनं
नाष्टादश प्राकृते ॥१३॥

ऐ औ-इति ॥ प्रायोवादोयम् ॥ कैअव [ = स० कैतवम् ] । सौअरिअं
५ [ = सं० सौन्दर्यम् ] । कौरवा [ = स० कौरवाः ] इत्यादौ क्वचित् ऐदौतोरपि
दर्शनात् । १।१३।१

जिह्वामूलीयश्च क्वचित् शौरसेन्यादौ वक्ष्यते ॥ तक्ष = त ᳵ को ॥ तथा ष्कः
मागध्यां वक्ष्यते ॥ यथा – यश्के [ = स० यक्ष. ] । लश्का [ = स० लाक्षा
।१।१३।२

१० लहशवशणमिअशुलशिलविअलिअमदालकाइअ अहियुगे ॥
वीलयिणेय पश्कालदु मह शअलमवय्ययंबाल ॥
= रभसवशनमितसुरशिरोविगलितमन्दारराजिताङ्घ्रियुग' ।
वीरजीन' प्रक्षालयतु मम सकलमवद्यजम्बालम् ॥
मागध्यां रस्य ल. सः शो जो य सेर्डे च वक्ष्यते ॥ १।१३।३
१५ चतुर्थी भ्यसि इति । चतुर्थ्या भ्यस् न प्रयुज्यते ॥ यद्वक्ष्यति –
षष्ठी चतुर्थ्याः सदा इति ॥ भ्यसि इति वचनात् चतुर्थ्या एकवचन-
मस्त्येव ॥ यद् वक्ष्यति—तादर्थ्योदितङे स्तु वा इति । तादर्थ्ये चतुर्थी
वाच्या इति विहिता या चतुर्थी तत्सम्बन्धिनो ङे षष्ठी वा स्यात् ॥ देवाअ
णिवेज्ज देवस्स वा [ = स० देवाय नैवेद्यम् ] देवार्थमित्यर्थ' ॥ १।१३।४
२० प्रान्त इति । प्रान्ते हल् नास्ति । लोपोन्त्यस्य हलः इति वचनात् ।
प्रान्तग्रहणादनन्त्यस्य हल. प्रयोग न वारयति ॥ १।१३।५

ङ्ञना इति । ङ्ञना पृथक् । पृथक् असंयुक्ता न सन्ति । पृथग्ग्रहणात्
संयुक्ताननुमन्यते ॥ पञ्चमो । सपङ्क । चिन्तइ । झङ्कइ ॥ १।१३।६

द्विवचनेति । स्यादीना त्यादीनां च द्विवचन न प्रयुज्यते । द्वित्वे बहुवचन-
२५ स्यैव विधास्यमानत्वात् ॥१।१३।७॥

सुप्तिङ्लिङ्गनराङ्गलादिबहुलं षष्ठी चतुर्थ्याः सदा ।
तादर्थ्योदितङेस्तु वा बहुवचो द्वित्वे प्रयोज्यं सदा ॥१४॥

तथा प्राकृते सुबादिविधिर्बहुलं भवति । यत्र विहितास्ततोन्यत्रापि भवन्ति ।
सुबिति स्यादय तिङिति च त्यादय पाणिनीयप्रसिद्ध्योच्यन्ते ।
३० तत्र द्वितीयार्थे षष्ठी यथा—गंगाधरस्स वदे [ = गङ्गाधरं वन्दे] ।
तृतीयार्थे—धणस्स लुद्धो । धनेन लुब्धः । पञ्चम्यर्थे—चोरस्स बीहइ [ = चौराद्

बिभेति] । सप्तम्यर्थे—पिट्ठस्स केसभारो = पृष्ठे केशपाशः इत्यर्थः ॥

क्वचिद् द्वितीयातृतीययोः सप्तमी ॥ यथा—गामे अहिवसामि [= ग्राममधिवसामि] । घरेण जामि [= गृहं गच्छामि] । तिसु तेसु अलंकिआ पुहवी = त्रिभिस्तैरलंकृता पृथिवी इत्यर्थः ॥

क्वचित् पञ्चम्यास्तृतीयासप्तम्यौ ॥ यथा चोरेण बीहइ = चौराद् बिभेति इत्यर्थः । अन्तेउरम्मि उआगओ राआ = अन्तःपुरादुपागतो राजा इत्यर्थः । ५

क्वचित् सप्तम्या द्वितीया । यथा—विज्जुओ अंतरइ रत्तिं = विद्युद् उद्योतते रात्रौ इत्यर्थः ।

आर्षे तु तृतीयापि । तेणं कालेण तेणं समएणं = तस्मिन् काले तस्मिन् समये इत्यर्थः । १०

क्वचित्प्रथमार्थे द्वितीया ॥ चउवीसं वि जिणवरा = चतुर्विंशतिरपि जिनवराः इत्यर्थः ॥१।१४।१

एवं तिङामपि व्यत्ययः । परस्मैपदात्मनेपदयो ॥

यथा—हसइ । हसए [= हसति] ॥ वेवइ । वेवए [= वेपते] ॥१।१४।२

लिङ्गव्यत्ययो यथा— १५

प्रावृट्-शरत्तरणयः पुंसि स्नान्तमपि क्वचित् ।
वचः शिरो नभः श्रेयः सुमनः शर्म-वर्म न ॥१५॥

प्रावृट् इति । पाउसो [= प्रावृट्] ॥ सरओ [= शरत्] ॥ एसो तरणी [= एषा तरणी] ॥१।१५।१॥

स्नान्त इति । सान्तं नान्तं च [क्वचित्] पुंसि स्यात् ॥ जसो [= यशः] । २० पओ [= पयः] । तमो [= तमः] । चेओ [= चेतः] । पुरो [= पूः] ॥ नान्तम्—जम्मो [= जन्म] । नम्मो [= नाम] । कम्मो [= कर्म] । पिम्मो [= प्रेम] ।

सर्वत्रान्त्यहलो लोपे सेर्डो क्वचित् इत्युक्तेनेह—वचः इति वअं ॥ [शिर इति] सिरं । [नभ इति] णहं । [श्रेय इति] = सेअं । [सुमन इति] २५ = सुमणं । [शर्म्म इति] = सम्मं । [वर्म इति] = वम्मं ॥

अन्त्यलोपे कृते क्लीबे अन्त्योरम् ॥१।१५॥

बिन्दुः कुलं मण्डलाग्रः खड्गो वचन-भाजने ।
छन्दो माहात्म्ययत्नेत्रार्थदुःखं वृक्षो गुणेस्त्रियाम् ॥१६॥

बिन्दुः इति । एते पुन्नपुंसकयोरुभयोर्भवन्ति ॥ बिंदूइं बिंदू = [बिन्दवः] ॥ ३० कुलं । कुलो । कुलाइं [= कुलानि] ॥ इत्यादि ॥

नेत्रार्थे । एए अच्छी अच्छीइं [ = एते अक्षिणी ] ॥ चक्खू । चक्खूइं [ = चक्षुः । चक्षूंषि ] ॥ णअणा । णअणाइं [ = नयनानि ] ॥ दुक्खो । दुक्खाइं [ = दुःखम् । दुःखानि ] ॥ रुक्खो । रुक्खाइं [ = वृक्षः । वृक्षा ] ॥ गुणो । गुणाइं [ = गुणाः ] ॥१।१६॥

इमान्ताञ्जलिपृष्ठाक्षिप्रश्नाः कुक्षिर्बलिर्निधिः ॥
रश्मिर्ग्रन्थिर्विधिर्विद्युच्चोरिकाद्यास्तु वा स्त्रियाम् ॥१७॥

[इमान्ता इति । इमान्ताः—एस गरिमा । एसा गरिमा [ = एष गरिमा ] ॥ एस धुत्तिमा । एसा धुत्तिमा । [ = एष धूर्तिमा ] ॥ पृथ्व्यादेर्वेमन् इति इमन्प्रत्यय । एस अंजली । एसा अंजली [ = एष अञ्जलि. ] ॥ पुट्ठं । पुट्ठी [ = पृष्ठम् ] ॥ इत्वपक्षे पिट्ठी इति स्त्रियामेवेत्येके ॥ एअ अच्छि । एसा अच्छी । [ = एतत् अक्षि ] ॥ एस पण्हो । एसा पन्हा । [ = एष प्रश्न. ] ॥ एस कुच्छी एसा च [ = एष कुक्षिः ] ॥ एष वली । एसा च [ = एष वलि. ] ॥ एस णिही । एसा च ॥ [ = एष निधि ] ॥ इस रम्ही । एसा च । [ = एष रश्मि. ॥ एस गण्ठी । एसा च [ = एषा ग्रन्थि. ] ॥ एस विही । एसा च [ = एष विधि ] ॥ एस विज्जू । एसा च । [ = एषा विद्युत् ] ॥ विज्जुणा । विज्जूए [ = विद्युता । विद्युते ] ॥ चोरिअ । चोरिआ [ = चोरिका ] ॥१।१७॥

अथां व्यत्ययो बहुलम् ॥ यथा ।

दीर्घह्रस्वौ समासे वा सन्धिर्वा पदयोः क्वचित् ।
नैदात्यादेर नासवर्ण्ययोर्वोद्वृत्ते क्वचिन्न लुक ॥१।१८॥

दीर्घ इति । समासे वा दीर्घह्रस्वौ भवतो व्यत्ययेन ॥ ह्रस्वस्य दीर्घः । अन्तर्वेदि = अन्तावेई ॥ क्वचिन्न । जुवइजणो [ = युवतिजन ] ॥ क्वचिद्वा । वारिमई । वारीमई [ = वरिमयी ] । पइहर । पईहरं [ = पतिगृहम् ] ॥ वेलुवण । वेलूवण [ = वेलुवनम् ] ॥ भुअअन्तं । भुआअन्तं [ = भुजयन्त्रम् ] ॥

दीर्घस्य ह्रस्व । णिअब सिलक्खलिअवीइमालस्य । [ = नितम्बशिला-स्खलितवीचिमालस्य ] ॥

क्वचिद्वा । जउँणजल । जउँणाजलं [ = यमुनाजलम् ] ॥ णइसोत्तं णईसोत्तं । [ = नदीस्रोतः ] ॥ वहुमुहं । वहूमुहं । [ = वधूमुखम् ] ॥ गोरिहरं । गोरीहरं [ = गौरीगृहम् ] ॥१।१८।१॥

सन्धिः इति । संस्कृतोक्तः सन्धि. पदयोर्द्वयोः प्रायेण भवति वा ॥ महीईसरो । महीसरो [ = महीश्वर ] ॥ वास इसी । वासेसी [ = व्यासऋषिः ] ॥

पद्‌योः इति वचनात् एकपदे सन्धिर्न ॥ पई [ = पतिः ] ॥ वच्छाओ [ = वत्सा. ] ॥ मुद्धाए [ = मुग्धायाः ] ॥ मइइ [ = मन्यते ] ॥ होइ [ = भवति ] ॥

प्रायो वचनात्क्वचिदेकपदेपि ॥ काहिइ । काही [ = कथयति ] बीइओ । बीओ [ = बीजितः ॥१।१८।१॥ ५

नैदो इति । एदोतोः स्यादेश्च स्वरस्य स्वरे परे सन्धिर्न स्यात् । अए अच्छरिअं [ = आश्चर्यम् ] ॥ तीए आणसं [ = स्त्रिया आसनम् ] ॥ आलक्खिमो एण्हिं । [ = आलक्षामः] इदानीम् ॥ होइइ [ = भविष्यति ] ॥ जंपेइ अअं [ = जल्पति अयम् ] ॥१।१८।२॥

नासवर्णे इति । असवर्णे अचि परे इकारोकारयो सन्धिर्न स्यात् ॥ १० वंदामि अज्ज [ = वन्दे आर्य ] ॥ दणुइंदो [ = दनुजेन्द्र ] ॥

य्वोः किम् ॥ गूढोअर तामरसाणुसारिणी [ = गूढोदर ताम्ररसानुसारिणी ] ॥

असवर्णे किम् । पुहवीसो । [ = पृथ्वीशः ] ॥१।१८।४॥

वोद्वृत्त इति । कगच इत्यादिलुप्तव्यञ्जनावशिष्ट स्वर उद्वृत्त. । १५ तत्र परेषां सन्धिर्वा स्यात् । व्यवस्थितवाक्यत्वाच्च क्वचिन्नैव ॥ गअणं [ = गगनम् ] ॥ रअणीअरो [=रजनीचर ] ॥ क्वचिद्वा । कुभआरो । कुभारो । [=कुम्भकार. ] ॥ सुउरिसो । सूरिसो । [=सुपुरुषः ] ॥

क्वचित्सन्धिरेव । सालाहणो = शातवाहन ॥ चक्काओ = चक्रवाक ॥१।१८।५॥ २०

क्वचिच्चलुक् ।इति ॥ अचामपि क्वचिच्च लुगपि स्यात् ॥ त्रिदशेश= तिअसीसो ॥ निश्वासोच्छ्वासौ=णिसासूसासा ॥१।१८।६॥

हलां व्यत्ययो यथा—

लोप्योन्त्यो हल् निर्दुरो०र्वा न स्वरे श्रदुदोस्तु न ।
अविद्युत., स्त्रियामात्व रा रेफस्य क्षुधस्तु हा ॥१९॥ २५

[ लोप्य इति । प्रकृते. प्रत्ययस्य वा यदन्त्यं हल् तल्लोप्यम् ॥ जाव ताव [ = यावत् तावत् ] ॥ जसो [=यशः] ॥ तमो [=तमः ] ॥ णहं [=नभः ] ॥ सिरं [=शिर. ] ॥

समासे तु विवक्षावशादन्त्यत्वमनन्त्यत्व च ॥ सद्भिक्षु = सभिक्खू । सब्भिक्खू ॥ सज्जन. = सज्जणो । सजणो ॥ एतद्गुणाः=एअगुणा । ३० एअग्गुणा ॥ तद्गुणाः=तग्गुणा । तगुणा ॥१।१९।१॥

निर् इति। अनयोरन्त्यस्य हलो लुग्वा स्यात्॥ णिस्सह। णीसहं। [=निःसहम्]॥ दुस्सहं। दूसह [=दुस्सहम्]॥ दुक्खिओ। दुहिओ [=दुःखितः]॥१।१९।२॥

न स्वरे इति॥ निर्दुरो. अन्त्यस्य लोपो न स्यादचि॥ णिरन्तरं [=निर-
५ न्तरम्]॥ णिरवआस [=निरवकासम्]॥ दुरुत्तर [=दुरुत्तरम्]॥ दुरव-
गाहं [=दुरवगाहम्]॥

बाहुलकादन्तरोपि न लोप.॥ अन्तरप्पा [=अन्तरात्मा]॥

क्वचिद् भवत्यपि॥ अंताउरिआ। [=अन्त पुरिका]॥१।१९।३॥

श्रदुदोरिति॥ अनयोर्नान्त्यलोप॥ सद्दहिअ [=श्रद्धितम्]॥ सद्धा
१० [=श्रद्धा]॥ उग्गअ [=उद्गतम्]॥ उण्णअं [=उन्नयम्]॥१।१९।४॥

अविद्युत इति। विद्युद्वर्जस्य स्त्रीलिङ्गस्यात्वम् अन्त्यहल स्यात्॥ लोपाप-
वादः॥ सरित्=सरिआ॥ [प्रतिपत्]=पडिवआ॥ [सपत्]=सपआ॥
विद्युतस्तु विज्जू॥ अन्त्यलोपे दीर्घ॥१।१९।५॥

रा इति। स्त्रियामन्त्यस्य रेफस्य रा स्यात्॥ गिरा [=गीः]॥ पुरा
१५ [=पूः]॥ धुरा [=धूः]॥१।१९।६॥

क्षुध इति॥ छुहा [=क्षुधा]॥१।१९।७॥

शरदोद् दिक्प्रावृषोः स आयुरप्सरसोस्तु वा॥
ककुभो हो वा धनुषो मोनुस्वारः स्वरे तु वा॥१।२०॥

शरदो इति। शरदोन्त्यस्य अत्व स्यात्। पुस्त्वात् सेर्डो॥ सरओ
२० [=शरत्]॥ बाहुलकात् भिषक्। भिसओ॥१।२०।१॥

दिगिति॥ अनयोरन्त्यस्य स इत्यादेश। स्त्रीत्वादाप्। दिसा
[=दिक्]॥ पुस्त्वात्सेर्डो॥ पाउसो [=प्रावृट्]॥ १।२०।२॥

आयुरिति। अनयोरन्त्यस्य सो वा स्यात्। दीहाउसो। दीहाऊ।
[=दीर्घायु.]॥ अच्छरसा। अच्छरा। [अप्सर.]॥१।२०।३॥

२५ ककुभ इति॥ स्त्रीत्वादाप्॥ कउहा [=ककुप्]॥१।२०।४॥

वा धनुषः इति॥

धनुहो धणू। [=धनु.]॥१।२०।५॥

मोनु इति। लोपापवादः॥ जलं [=जलम्]॥ वण। [=वनम्]
क्वचिदनन्त्यस्यापि॥

वणम्मि। वणमि। [वने]॥१।२०।६॥
३०
स्वरे इति। स्वरे परे मस्यानुस्वारो वा स्यात्॥

णमह अवड्ढिअतुंग अवसारिअवित्थअं अण्णोण्णअगहिरं ।
अप्पलघुअपरिसण्हं अण्णाअपरमत्थपाअडं महुमहणं ॥
नमतावर्धिततुङ्गमपसारितविस्तृतमर्णोनदगम्भीरम् ।
आत्मलघुप्रसन्नमज्ञातपरमार्थप्राकृतं मधुमथनम् ॥
पक्षे मस्य स्थितिः ॥ ५
मम सअलमवज्जजंवाल [= मम सकलमवद्यजम्बालकम्] ॥१।२०।७॥

नासिक्यानामनुस्वारोपदान्तेपि विभाषया ॥
मासमांसलकांस्येषु पांशुप्रांशुककिंशुके ॥२१॥
कथ नूनमिदानीं किं-सिंह-कांसिक-दाणिमि ॥
संस्कारे च समो मे च बिन्दोर्वालोप इष्यते ॥२२॥ १०

नासिक्यानामिति । पती । पन्ती । [= पङ्क्ति] ॥ परमुहो । परम्मुहो । [= पराङ्मुख] ॥ कचुअ । कन्चुअ [= कञ्चुकम्] ॥ उक्कठा । उक्कण्ठा [= उत्कण्ठा] ॥ विझो । विन्झो [= विन्ध्य] ॥ चदो । चन्दो [= चन्द्र] ॥ कपइ । कम्पइ । [= कम्पते] ॥१।२१।१॥

मांस इत्यादि । माम [= मांसम्] ॥ मासलो [= मासल] ॥ इत्यादि । १५
१।२२।२॥ लोपाभावे ॥

सयोगे ह्रस्वता बिन्दुराद्याद् वक्राश्रु-मूर्द्धसु ।
गुच्छ-पुच्छ-श्मश्रु-पर्शु-ब्रघ्न-कर्कोट-दर्शने ॥२३॥
कुड्मल-त्र्यस्र-मार्जार-गृष्टि-वृश्चिक एष्वपि ।
मनःशिला-मनस्विन्योर्वयस्ये च प्रतिश्रुति ॥२४॥
द्वितीया स्यात् तृतीयात्तु स्यादुपर्यतिमुक्तके । २०
शषयो स स्पष्फयोः फः क्षस्य तु छक्षखा. क्वचित् ॥२५॥

सयोग इति । मस [= मांसम्] ॥ मसलो [= मासलः] ॥ इत्यादि ॥ १।२३।१॥

बिन्दुरिति ॥ वक [= वक्रम्] ॥ असू [= अश्रु] ॥ मुधा [=मूर्धा] ॥ इत्यादि ॥ १।२३।२॥ २५

[द्वितीयेति ॥] मणसिला [= मन.शिला] ॥ माणंसिणी [=मनस्विनी] ॥ १।२५।१॥

तृतीयादिति ॥ अवरिं [=उपरि] ॥ अणिमुत्तअं [= अतिमुक्तकम्] ॥१।२५।२॥

शषयोरिति । शश. = ससो ॥ अश्वः = अस्सो ॥ एष. = एसो ॥ ३०
मेषः = मेसो ॥ १।२५।३॥

स्पष्प इति ॥ स्पष्क इति संयोगयोः फ इत्यादेशः स्यात् ॥ निस्पन्दः = णिप्फंदो ॥ प्रतिस्पर्धी = पाडिप्फद्धी ॥ पुष्पम् = पुप्फ ॥ निष्पेषः = णिप्फेसो ॥

बाहुलकात् क्वचिन्न ॥ निस्पृहः = णिप्पहो ॥१।२५।४॥

क्षस्येति ॥ क्षस्य यथाविधानमेते त्रय स्युः ॥ क्षीणम् = छीणं । झीणं । ५ खीण ॥ क्वचित्ख एव ॥ क्षयः = खओ ॥ लक्षणम् = लक्खण ॥१।२५।५॥

र्य्यद्यर्य इति योगस्य ज स्याज्जज्झोध्यह्यसाध्वसे ॥
समस्तस्तम्बवर्जस्य स्तस्य थः त्यथ्ययोश्चछौ ॥२६॥

र्य्यद्यर्येति ॥ संयोगानामेषां जः स्यात् ॥ द्य—मज्ज = [ मद्यम् ] ॥ खजए [=खाद्यते ] ॥ र्य्य—जय्य = जज्जो ॥ र्य—भज्जमा [ = अर्यमा ] ॥ १० सुज्जो [ = सूर्य ] ॥ अज्ज [ = आर्य ] ॥ कज्ज [ = कार्यम् ] ॥ १।२६।१॥

झो इति ॥ एषां संयोगस्य झ स्यात् ॥ ध्य—सझा [ = सन्ध्या ] ॥ विंझो [ = विन्ध्यः ] ॥ ह्य—गुज्झ [=गुह्यम् ] । सज्झ [=सह्यम् ] ॥ सज्झस [=साध्वसम् ] ॥१।२६।२॥

समस्तेति ॥ हत्थो [=हस्त ] ॥ थुई [=स्तुति ] ॥ वलोपः । सत्थि १५ [=स्वस्ति ] ॥ समस्तस्तम्बवर्जस्य किम् । सलोप । समत्तो [ = समस्त ] ॥ तबो [=स्तम्ब ] ॥ १।२६।३॥

त्यथ्ययोरिति ॥ णिच्च [=नित्यम् ] ॥ णच्चइ [ = नृत्यति ॥ णेवच्छ [=नेपथ्यम् ] ॥ पच्छ [=पथ्यम् ] ॥ रच्छा [=रथ्या ] ॥ १।२६।४॥

ड्मक्मोः पः ह्वस्य भो वाथ न्मस्य मो ग्मस्म चापि वा ॥
२० लुग् युक्ताद्याः ᳵक ᳶपशषसकगाः पटडास्तदौ ॥२७॥

ड्मक्मोरिति । अनयो प स्यत् ।' कुड्मलम् । वक्रादित्वाद् बिन्दु । कुपल ॥ रुक्मिणी=रुप्पिणी ॥ १२७।१॥

ह्वस्येति ॥ द्वित्वम् । झला झलि पदान्ते च तृतीय ॥ प्रह्व = पब्भो । पह्वो ॥ आह्वानम् = अब्भाण ॥१।२७।२ ।

न्मस्येति ॥ द्वित्वम् । [ जन्म=] जम्मो ॥ [ मन्मन· = ] मम्मणं ॥ २५ [ तन्मयम्=] तम्मअ ॥१ २७।३॥

ग्मस्ये ॥ तिग्मम्=तिग्ग । तिम्म ॥ युग्मम्=जुम्म । जुग्ग ॥ १।२७।४॥

लुगिति ॥ संयोगस्यादिभूतयोर्जिह्वामूलीयोपध्मानीययो शादीनां च लुक् स्यात् ॥ शुष्कम् = सुक्कं ॥ दु खम्=दुक्खं ॥ दु ᳶकरम्=दुक्कर ३० ॥ अन्तःपात = अतप्पाओ ॥ निश्चल=णिच्चलो । श्लक्ष्णम्=लण्हं ॥ गोष्ठी= गोट्ठी ॥ षष्ठी=छट्ठी ॥ स्कन्धः=खधो ॥ स्नेह =णेहो ॥ भुक्तम्=भुत्तं ॥ मुक्तम्=

मुत्तं ॥ दुग्धम् = दुद्धं ॥ मुग्धम् = मुद्धं ॥ सुप्तः = सुत्तो ॥ गुप्तः = गुत्तो ।
षट्पदः = छप्पओ ॥ कट्फलम् = कप्फलं ॥ खड्गः = खग्गो ॥ षड्जः = छज्जो ॥
उत्पलम् = उप्पलं ॥ उत्पातः = उप्पाओ ॥ मद्गुरः = मग्गुरो ॥ मुद्गरः =
मोग्गरो ॥१।२७॥

युक्ताधो मनायां प्रायः सर्वत्र लवरामपि ॥
सर्व-शुल्ब-द्वितीय-द्विगुणोद्विग्नादिषूर्ध्वलुक् ॥२८॥

युक्तेति ॥ संयोगस्याध स्थितानां मनायाम् प्रायेण लोपः स्यात् ॥ युग्मम्=
युग्गं ॥ स्मरः=सरो ॥ नग्नः=णग्गो ॥ साम्यम्=सम्मं ॥ कुड्यम्=कुड्डं ॥१।  ॥

सर्वत्रेति ॥ सर्वत्र संयोगस्यादावधो वा स्थितानाम् लकार-वकार-मकाराणां
लोप ॥ उल्का = उक्का । वल्कलम्=वक्कलं । शुल्क=सुक्को । विक्लव = विक्कओ ॥
ध्वस्त = धत्थो ॥ पक्वम् = पक्कं ॥ विश्वेश्वरः=वीसेसरो ॥ चक्रम्=चक्कं ॥ ग्रहः=
गहो ॥ आदिलोपादधोलोपो विप्रतिषेधेन ॥ [ नग्नः = ] = णग्गो ॥

अधोलोपाच्च लवराम् ॥ कल्मषम् = कम्मसं ॥

सर्वेति । सर्वम्=सव्वं ॥ [ शुल्बम् = ] सुव्वं ॥ [द्वितीयः=] बीओ ॥
[ द्विगुणः ]=विउणो ॥ [ उद्विग्नः = ] उव्विग्गो ॥ द्वेष्यः = वेसो ॥१।२८॥

द्विजाति-द्वीप-कुल्या-सुकाव्य-माल्यादिष्वधः ।
द्वारोद्विग्नादिषु द्वेधा रामचन्द्रे तु रो न लुक् ॥२९॥

द्विजातीति । [ द्विजातिः = ] दुआई ॥ [ द्वीपः=] दीओ ॥ [ कुल्या= ]
कुल्ला ॥ [ काव्यम् = ] कव्वं ॥ [ माल्यम्= ] मल्लं ॥

द्वारेति । [ द्वारम्= ] बारं, दारं ॥ [ उद्विग्नः= ] उव्विग्गो । उद्विग्गो ।
पक्षे उद्दिग्गो ॥

रामेति । रामचन्द्रो संस्कृतसमोयम् ॥१।२९॥

द्रधात्र्योर्वा त्रस्य रात्रौ हरिश्चन्द्रे शचोरपि ।
लुग् दशार्हे हस्य मधुमथने वा न शब्दलुक् ॥३०॥

द्रधात्र्योरिति । द्रशब्दे धात्रीशब्दे च रस्य लुग्वा ॥ [समुद्रः=] समुद्रो ।
समुद्दो ॥ [ चन्द्रः = ] चन्द्रो । चन्दो ॥ [ रुद्रः = ] रुद्दो ॥ [ भद्रः = ] भद्रो ।
भद्दो ॥ तलोप ॥ [ धात्री= ] । धाई । धारी ॥

त्रस्येति । रात्रिशब्दे त्र इति संयोगस्य लुग्वा ॥ राई । रत्ती ॥१।  ॥

हरिश्चन्द्रेति । [ हरिश्चन्द्रः= ] हरिअंदो ॥१॥

लुगिति । [ दशार्हः = ] दसारो ॥१॥

मध्विति । थकारयोर्हत्वम् । मधुमथः = ] महुमहो ॥

[ मधुमथन = महुमहणो ।।१।।
सग्गा अपारिआअ कोत्थुह-लच्छिविरहिअं ।
महुमहणस्स उर सुमरामि अमुद्ध महणपुरओ चदं हरजडापब्भार ।।
स्वर्गमपारिजात कौस्तुभलक्ष्मीविरहितम् ।
५ मधुमथनस्योर स्मरामि मथनपुरतः अमुग्धचन्द्र हरजटाप्राग्भारम् ।।१।३०।।

ह्रस्वाच्छेषादेशयोर्द्वियुक्ते नाद्योर्न रेफहोः ।
समासे वा भवेद् द्वित्वमशेषादेशयोरपि ।।३१।।

ह्रस्वादिति ।। सयुक्ते लोपावशिष्टस्यादेशभूतस्य चानादेर्ह्रस्वात्परस्य हलो द्वित्वं स्यात् , न तु रेफहकारयोः । शेषे— [ उक्तम् = ] उत्त ।। [ भुक्तम् = ] १० भुत्तं ।। [ दुग्धम् = ] दुद्धं ।। [ अर्क = ] अक्को ।। [ मार्गः = ] मग्गो ।। आदेशे—[ विद्या = ] विज्जा ।। [विज्ञ = ] विण्णो ।। [मध्यम. = ] मज्झिमो ।।

ह्रस्वात्किम् । [नि श्वासः = ] णीसासो । [शीर्षम् =] सीस ।। [ईश्वर = ] ईसरो ।। [ आज्ञा = ] आणा ।। [ दुस्सहम् = ] दूसह [ दर्शनम् = ] दंसणं ।। [ स्पर्शः = ] फासो ।। [ वक्रम् = ] वक ।।

१५ युक्ते किम् । [गगनम् =] गअण ।। अनाद्योः किम् । [ स्तम्भ =] खभो ।। [ स्तुतिः = ] थुई ।।

रहोस्तु ।। सौन्दर्यम् = सुदरिअ । सुदेरं ।। विह्वल =विहलो ।।

समास इति ।। समासे वा द्वित्व स्यात् । [कुसुमप्रकर. =] कुसुमप्पअरो । कुसुमपअरो ।। [ नन्दिग्राम =] णइग्गामो । णइगामो ।।

२० अशेषा इति ।। [ सर्पिर्व्यास =] सपिवासो । सप्पिवासो ।। [त्रैलोक्यम् =] तेल्लोक । तेलोक ।।१।३१।।

तैल-प्रभूत-मण्डूक स्रोतो-विचकिलर्ज्जुषु ।
व्रीडाप्रेम्णोर्द्विरन्त्यस्य यौवनादौ तु मध्यतः ।।३२।।

तैलेति । [ तैलम् =] तेल्ल ।। [प्रभूतम् =] बहुत्त ।। [मण्डूक =] मडुक्को ।। २५ [ स्रोतः = ] सोत्तं ।। [ विचकिल = ] विअइल्लं ।। [ ऋजु = ] उज्जू ।। [ व्रीडा = ] विड्डा ।। [ प्रेम = ] पेम्म ।। [ यौवनम् = ] जोव्वण ।।१।३२।।

सेवा-नीड-नख-स्थूल-निहित-व्याकुले हृते ।
मृदुके व्याहृते स्त्याने दैवे मूके कुतूहले ।।३३।।
स्थाणुतूष्णीकास्मदीयादिषु द्विर्वा यथोचितम् ।

३० सेवेति । सेव्वा । सेवा । णेड्डं । णीडम् ।। णक्ख । णह । नखम् ।। थोल्ल । थूलं ।। [=स्थूलम् ] ।। णिहित्तो । णिहिओ । निहितः ।। वाउल्लो । वाउलो [ =

व्याकुल ] ॥ हुत्त । हुअं [=हृतम्] ॥ माउक्क । माउअ । [=मृदुकम्] ॥ वाहुत्तो । वाहुओ । [=व्याहृतः] ॥ थिणण । थीण । [=स्त्यानम्] ॥ देव्वं । देव । दइवं । [=दैवम्] ॥ मुक्को । मूओ [=मूकः] ॥ कोउहल्लं । कोउहल [=कुतूहलम्] ॥ खण्णू । खाणू । [=स्थाणुः] ॥ तुण्हिक्को । तुण्हिओ । [=तूष्णीकम्] ॥ अम्हक्केर । अम्हकेर । [=अस्मदीयम्] ॥ ५

शषसां लुप्तयवरां प्राग्दीर्घः स्यात् त्सच्छ्योरुतः १॥३४॥

शषसामिति । प्राकृतलक्षणवशाल्लुप्ता यवरा येषां शषसां तेभ्यः पूर्वस्याचो दीर्घः ॥ पश्यति = पासइ ॥ कश्यप = कासवो । अश्वः=आसो ॥ विश्वास = वीसासो ॥ विश्रामः=वीसामो ॥ मिश्रम्=मीस ॥ ष—शिष्यः=सीसो ॥ मनुष्यः= मणूसो ॥ विष्वाण.=वीसाणो ॥ विष्वक्=वीस ॥ कषक. = कासओ ॥ वर्षा = वासा ॥ स-शस्यम् = सासं ॥ कस्यचित् = कासइ ॥ विकस्वरः = विकासरो ॥ १० निःश्व = णीसो ॥ नि सह = णीसहो ॥

त्सच्छ्वेति । त्सशब्दे छ्वशब्देपि लोपावशिष्टे परे उतो दीर्घ. । उत्सव =ऊसओ ॥ उत्सिक्तः = ऊसित्तो ॥ उच्छ्वसति = ऊससइ । [ उच्छ्वास. = ] ऊसासो ॥

तालव्ये रोध स्थितानामेव लोपे न दीर्घता ॥

तेनेह न । आदर्शक = आअरसिओ ॥ १॥३४॥ १५

इति सामान्यविधि-प्रकाश ॥

— ० —

## द्वितीयः प्रकाशः

# [ असंयुक्तादेशप्रकाशः ]

३५ क-ग-च-त-ज-द-पत्यं लुप्यते नाद्ययुक्तं
न विदुरसमवाये कोपने नो सपापे ॥
स्वगत-सुगत-देवे दानवे चूचुके चा—
गुरु-विजन-सुतारे न प्रयागे सचापे ॥२॥१॥

५ कगचेति । अनादौ स्थिता असंयुक्ताः कादयो लुप्यन्ते विदुरादिवर्ज्जम् ।

क—॥ [ लोकः ] = लोओ ॥ [ शकटम् ] = सअड ॥

ग—॥ [ नगरम् ] = णअरं ॥

च—॥ [ शची ]=सई ॥ [ लोचनम् ] = लोअण ॥

ज—॥ [ राजा ] = राआ ॥

१० त—॥ [ भूतलम् ]=भूअलं ॥ [ आगत· ] = आगओ ॥

द—॥ [मदनः]=मअणो ॥

प—॥ [रिपु ] = रिऊ ॥

व —[लावण्यम्=] लाअण्ण ॥

वर्ग्गोपि वो गृह्यते ॥ [ विबुद्धः ] = विउद्धो ॥

१५ य—[नयनानि = ] णअणाइं ॥

अनादौ किम् । [काल.]=कालो ॥ [गव्यम् =] गव्वो ॥ [ चौरः=] चोरो ॥ [जार =] जारो ॥ [तरु.] = तरू ॥ [दारुण.] = दारुणो ॥ [ पुरुष. ]=पुरिसो ॥ [ वनम् ] = वण ॥

यस्य तु जत्वमादेर्वक्ष्यते ॥

२० वृत्तौ तु वाक्यविभक्त्यपेक्षया भिन्नमभिन्न च पदं यथालक्ष्यं विवक्ष्यते ॥ तेनोभयथापि दृश्यते ॥

[ सुखकर ]=सुहकरो ॥ सुहअरो ॥ [ बहुतरः= ] बहुदरो ॥ बहुअरो ॥

अयुक्तं किम् । [अर्क ]=अक्को ॥ [ वर्ग. ]=वग्गो ॥ [ शंकरः ]=संकरो ॥ [ संगमः=] सगमो ॥

२५ विदुरादेस्तु । [ विदुरः ] = विदुरो ॥ [ समवायः ]=समवाओ ॥ इत्यादि ॥२।१॥

३६ स्यादवर्णादवर्णस्योद्वृत्तस्य लघु-य-श्रुतिः ।
स्वरादयुक्तस्यानादेर्नो णो वादौ तु पस्य वः ॥२॥

स्यादिति । उद्वृत्तस्य व्यञ्जने लुप्ते सस्वरशिष्टस्य अवर्णस्य लघुप्रयत्नः अवर्णोऽयकारस्य आगम उच्चार्यः ।

[ नगरम् ] = णयरं ॥ [गगनम् ] = गयणं ॥ ५

अवर्णात्किम् । [ कोपनम् = ] कोवण ॥ [द्वीप ]=दीओ । अवर्णस्य किम् । [ राजीवम् ] = राईवं ॥ [ सगुणम् ] = सउणं ॥

स्वरादिति । स्वरात्परस्यासंयुक्तस्यानादौ स्थितस्य नस्य णत्वं स्यात् । [ कनकम् ] = कणअं ॥ [ मानिनी ] = माणिणी ॥

वादौ इति ॥ आदौ तु नस्य णो वा ॥ [ नरः ] = णरो । नरो ॥ [ नदी ]= १० णई । नई ॥

असंयुक्तस्येत्येव । न्यायः=नाओ ॥

पस्येति । शपथः=सवहो ॥ शापः = सावो ॥

स्वरादित्येव । [ कम्पते = ] कम्पइ ॥

असंयुक्तस्येत्येव । अप्पा ॥ अनादेरित्येव । [पुरुषम् ]=पुरिसं ॥ [ पठति ] = १५ पढइ ॥ व्यवस्थितवानुवृत्तेरवन्तादेव वः ॥ नेह । रिपु.=रिऊ ॥ क्वचिन्न । कपिः=कई ॥ पस्य वत्वलोपावुक्तौ । तत्र यस्मिन्कृते श्रुतिसुखमुत्पद्यते स तत्र कार्य इति ॥२।२॥

३७. टस्य डः स्यान्नत्वटतेष्ठस्य ढो डस्य चापि लः ।
वडिशे दाडिमे नाडी नडेष्वपि गुडेपि वा ॥३॥

टस्येति । अयुक्तस्यानादेष्टस्य ड स्यान्नाट्-धातोः । नटः = नडो ॥ भटः= २० भडो ॥ स्वरादित्येव । [ घण्टा = ] घण्टा ॥ अयुक्तस्येत्येव । [ खट्वा = ] खट्टा ॥ वलोपे द्वित्वम् । अनादेरित्येव । टक्को । अटतेस्तु अटति । अटइ ॥

ठस्येति । ठस्य ढकार. । [पठति] = पढइ ॥ [मठः]= मढो ॥ [ कुठारः= ] कुढारो ॥ स्वरादेव । [ वैकुण्ठ. = ] वेकुंठो ॥ असंयुक्तस्यैव । [तिष्ठति]=चिट्ठइ ॥ वट्टइ [ = वर्तते ] ॥ अनादेरेव । [ स्थविरः= ] ठेरो ॥ २५

डस्येति । डस्य लः । वडवा=वलआ ॥ [कडार ]=कलारो ॥ गरुडः=गरुलः ॥ स्वरादित्येव । मोण्डं । कोण्ड ॥ युक्तस्य तु [खड्गः=] खग्गो ॥ आदेस्तु डिम्भो ॥

वडिशेति । एषु डस्य लो वा । वलिसं । दालिमं । नाली । नलं । गुलो । पक्षे वाडशमित्यादि ॥३॥

३८. निविडे पीडिते गौडे निगडोडुतडित्सु न । ३०
रस्य लः स्यादयुक्तस्य शिशिरे चरणे नरि ॥४॥

निबिडेति । पृशु लस्य न । निबिड । [पीडितम्=] ॥ पीडिअ । [गौडः=] गोडो । [निगड.=] णिअडो । [उडुः=] उडू । [तडित्=] तडी ॥

रस्येति । [सिथिर =] सिढिलो । [चरण.=] चलणो । नळो ॥ [सत्कार =] सक्कालो । [रुग्णः=] लुग्गो ॥ इत्यादि ॥२४॥

५ ३९. सत्कारे शिबिरे रुग्णे दरिद्रातौ च वत्सरे।
परिघे पारिभद्रे च करुणे वरुणेरुणे ॥५॥

४०. परिखासुकुमारापद्वारेषु समरे वरे।

४१. विवरे जठरे वारे किराते मत्सरे करे ॥६॥
जठरे निष्ठुरे चैव शबरे मुखरेपि च।

१० हरिद्रायां हलद्दी स्याद्धलद्दा वेश लस्य वा ॥७॥

[शिबिरः]=शिविलो ॥ [चरण·] = चलणो ॥ [सत्कार.]=सक्कालो= [रुग्ण.] = लुग्गो इत्यादि ॥६॥

हरिद्रेति । हलद्दशब्दे लकाराकारस्य ह्रस्वं च वा स्यात् । हलिद्दी । हलद्दी । हलिद्दा इत्यपि ॥२।७॥

१५ ४२ अङ्गारस्य तु अंगालो इंगालो अंगार इत्यपि।
फोभहौ बहुलं बो वो ह्रत्वं खघथधां सभाम् ॥८॥

फोभेति । फस्य भत्वं ह्रस्वं च स्यात् क्वचिद्द· । रेफ = रेभो ॥ शिफा = सिभा ॥ क्वचित्तु ह. ।

[मुक्ताफलम्] = मुत्ताहल ॥ क्वचिदुभौ । सफलम् = सफल ॥ सहलं ॥

२० शेफालिका=सेभालिआ ॥ सेहालिआ ॥ शफरी = सभरी । सहरी ॥ हस्र-गुभइ । गुहइ ॥

स्वरादित्येव । गुम्फइ ॥

अयुक्तस्येत्येव । [पुष्पम् =] पुप्फ ॥ [अनादेरित्येव । फणी ॥ [समासे भिन्नपदत्वविवक्षया । [कृष्णफणी =] कसणफणी ॥

२५ बोवेति ॥ पवर्गीयस्य बस्यान्तस्थोयो वः स्यात । [अलाबू] = अलावू ॥ [सबलः] = सवलो [स्वरादित्येव । [शम्बूकः] = सम्बूओ ॥

[ह्रत्वमिति । खघथधभ इति पञ्चानां ह. ।

ख—[सखा] = सहा ॥ [सुखम्] = सुह ॥ [मेखला] = मेहला [लिखति] = लिहइ ॥

३० घ—[मेघ] = मेहो ॥ [माघ] = माहो ॥ [जघनम्] = जहणं ॥

थ—[नाथः] = णाहो ॥ [पथ·] = पहो ॥ [मिथुनम्] = मिहुण ॥

ध—[ साधुः ] = साहू ॥ [ बधिरः = ] बहिरो ॥ [ इन्द्रधनुः ] = इंदहणू ॥ [ स्वभावः ] = सहावो ॥ [ नभः ] = णहं ॥ [ शोभते ] = सोहइ ॥

स्वरादित्येव । [ शङ्ख.] = सङ्खो ॥ [ सङ्घो ]=संघो ॥ [ कन्था ] = कथा ॥

अयुक्तस्येत्येव । [ नक्षत्रम् ] = नक्खत्तं ॥ [ प्रस्तर. ] = पत्थरो ॥ ५

अनादेरेव । [ एष क्षत्रियः ] = एस खत्तिओ ॥

समासे पृथक्पदत्वविवक्षया । [ प्रलयघनः ] = पलअघणो ॥ [ रामभद्र. ] = रामभद्दो ॥२।८॥

४३ पदस्यादेर्यस्य जः स्यात् शुनके कस्य हः स्मृतः ।
कस्य खः कर्प्परे कीले कुब्जे पुष्पेऽन्यतोऽप्ययम् ॥९॥ १०

पदस्येति । [ यशः ] = जसो ॥ [ यम· ] = जमो ॥

उपसर्गाणां पृथग् विवक्षया । [ संयमः ] = सञ्जमो ॥ [संयोगः]=सञोओ ॥

शुनेति । [ भ्रम धार्मिक विस्रब्धः स श्वा अद्य मारितस्तेन = ] भम धम्मिअ वीसत्थो सो सुणहो अज्ज मारिओ देण ॥

कस्येति । रलोपे द्वित्वे खप्परं ॥ खीलो ॥ स्वार्थे के [कीलकः]=खीलओ ॥ १५

कुब्जेति । पुष्पान्यवाचिनः कुब्जशब्दस्य खः । खुज्जो ॥ पुष्पे तु कुज्जअ ॥

सर्वत्र कवराम् इति वलोपे द्वित्वम् ॥

अन्येति । आर्षेऽन्यस्यापि कस्य ख स्यात् । कासितम्=खासिअ ॥ कासितम्= खसिअ ॥२।९॥

४४ गत्वं मरकते कस्य तथा मदकले भवेत् । २०
किरातस्य चिलाअः स्यात् कन्दुकस्य तु गेदुअं ॥१०॥

गत्वमिति । [ मरकतम् ] = मरगअ ॥ [ मदकल ] = मअगलो ॥ किरातेति । कस्य चस्य निपात्यते । कस्य निपात्यते । लत्व तु रस्य ल इति स्थितमेव । [ किरातः ] = चिलाओ ॥ पुलिन्द एवेष्यते । नेह—। णमिमो हर किराअं ॥= [ नमामो हर किरातम् ] ॥ २५

कन्दुकेति । अस्यादेः कस्य गत्व निपात्यते ॥२।१०॥

४५ शीकरे सीहरोऽपि स्यात्सीभरः सीअरोऽपि च ।
चन्द्रिकायान्तु मः कस्य चिकुरे निकषे च हः ॥११॥

शीकर इति । कस्य भत्व हत्व च वा निपात्यते । पक्षे कलोपः स्थित एव ।

चन्द्रिकायामिति ॥ रलोपः । चंदिमा ॥ ३०

चिकुरेति । अनयोः कस्य हः स्यात् । चिहुरो । निहसो ॥२।११॥

४६ फलिहः स्फटिकस्य स्यात् स्फाटिके परिचे तथा ।
दीर्घे दिग्घोपि दीहोपि शृङ्खलस्य तु संकलम् ॥१२॥

फलिहेति । टस्य लः । कस्य हः ॥
स्फा इति । फलिहो । फालिहो ॥
५ दीर्घेति । एकत्र घस्य द्वित्वे उपरि तृतीय परत्र तु नेति भेदः ॥
शृङ्खलेति । खस्य को निपात्यते । ऋतेः अत्व स्थितमेव ॥२।१२॥

४७ पृथक्शब्दस्य तु पिधं पुधं वापि पिहं पुहं ।
गस्य मो भागिनी पुन्नागे वा छागे तु गस्य लः ॥१३॥

पृथगिति । अस्य चत्वारः आदेशाः ॥
१० गस्येति । भामिणी पुण्णमाइ वसंते । पक्षे गलोपे भाइणी पुण्णाओ ॥
छाग इति । छालो छाली ॥२।१३॥

४८ दुर्भगे दूहवः पक्षे सुभगे सूहवोपि च ।
खचिते खसिओपि स्यात् पिशाचेपि पिसल्लवत् ॥१४॥

दुर्भगेति । उत ऊत्वे गस्य वत्व भस्य हत्वं तु स्थितमेव । पक्षे कगचेति
१५ गलोपे हस्व भत्व द्वित्वम् । दुरोन्त्यलोपे दूहओ सूहओ ॥ अन्त्यलोपाभावे
सर्वत्रेति रलोपे द्वित्वे । दुब्भओ । सुहओ ॥
खेति । अपिशब्दात्पक्षे च तयोर्लोपे खइओ ॥ पिशाचेति । पिसल्लो ॥
पक्षे च लोपे । पिसाओ ॥२।१४॥

४९ झो वादेर्जटिले टस्य सटायां शकटे च ढः ॥
२० कैटभे केढवं विद्यादौषधेत्वोसढौसहौ ॥१५॥

झो इति । जटिलशब्दे आदेर्जस्य झत्व वा स्यात् टस्य डः । झडिलो ।
पक्षे जडिलो ॥
टस्येति । एतयोष्टस्य ढः स्यात् । [सटा =] सढा । कलोप. । [शकटः=]
सअढो ॥
२५ [ कैटभेति । टस्य ढो निपात्यते । केढवो ॥
[ औषधेति । ओसढं । ओसहं । ढत्व वेत्यर्थः ॥२।१ ॥

५० ढोंको ढेल्लश्चपेटायाश्चविला चविडा तथा ॥
पिठरे पिहडोपि स्याच् चुच्छं छुच्छं च तुच्छवत् ॥१६॥

ढोंको ढे इति । अङ्कोठ-शब्दे ठस्य द्विरुक्तोल्लः स्यात् । अकोल्लो । अकोल्ल-
३० तेल्लं । संयोगे ह्रस्वता । पक्षे अंकुल्ल ॥ चपेटा इति स्पष्टम् ॥
पिठरेति । ठस्य हः रस्य च ड इति यावत् । पक्षे पिढरो । ठस्य ढः ॥

शुष्कमिति । शुष्कस्यैते त्रयः स्युः । तस्य षको वेत्यर्थः ॥ सुण्णं । सुक्खं । सुण्डं ॥२।१६॥

५१ वेणोर्वा वेलुर्वेलू तगर-तूबर-त्रसरे तटः ॥
(तो डः पताकाप्रभृतिप्राभृतव्यापृतप्रतेः ॥१७॥)

वेणोर्वेति । वेलु । वेलू । पक्षे वेणू ॥

तगरेति । एषु तस्य टः स्यात् । टगरो । टूबरो । टसरो ॥ रलोपः ॥

तो डेति । एषां तस्य डः स्यात् । [ पताका ] = पडाआ ॥ [ प्रभृति ] = पहुडि ॥ [ प्राभृतः ] = पाहुडो ॥ पलोपः ॥ पो वः । ऋतोत् । [ व्यापृतम् ] = वावडं ॥ [ प्रतिकूलः ] = पडिऊलो ॥ [ प्रतिमा ] = पडिमा ॥ [ प्रतिपदा ] = पडिवआ ॥ [ प्रतिहारः ] = पडिहारो ॥१७॥

५२ न प्रतिष्ठा-प्रतिष्ठान-प्रतिज्ञा-संप्रतिष्वयम् ।
न प्रतीपप्रतिसमययोरो वास्य तिष्ठतौ ॥१८॥

न प्रतिष्ठेति । एषु प्रतस्तस्य डो न स्यात् । रलोपः । षलोपः । ठस्य द्वित्वम् । [ प्रतिष्ठा = ] पइट्ठा । [ प्रतिष्ठानम् ] = पइट्ठाणं ॥

म्नज्ञोर्णः । [ प्रतिज्ञा ] = पइण्णा ॥ [ सम्प्रति ] = सपइ ॥

नेति [ प्रतीपम् ] = पईव ॥ [ प्रतिसमयम् ] = पइसमअं ॥

रो वेति । अस्य प्रतेस्तकारस्य स्थाधातौ परे रो वा स्यात् । [ प्रतिष्ठिता शङ्खशुक्तीव ] = परिट्ठिआ सखसुत्तिव्व ॥ पक्षे पइट्ठिआ ॥१८॥

५३ हरीतक्यां हरडई बहेडअ्र बिभीतके ॥
मृतके मडअ्र वेतसे तु वेडिस-वेअसौ ॥१९॥

हरीतक्यामिति । बहेडओ ॥ मृतेति । स्पष्टम् । वेतसेति । वेडिसो । वेअसो ॥१९॥

५४ गर्भिते गब्भिणो रुण्णो रुदिते गद्गदे र दः ॥
अतस्यामलसी पीते पीअ-पीवल-पीअलाः ॥२०॥

गर्भितेति । गब्भिणो ॥ रुण्णेति । रुण्ण रामेण ॥ गद्गदेति । गद्गद-शब्दे दस्य रः स्यात् । सयोगादिलोपः । गद्वित्वम् । [ गद्गदः ] = गग्गरो ॥

अतेति । तस्य क इत्यर्थः । पीतेति । [पीतम् ]=पीअं । पीवलं । पीअलं ॥

५५ हालः सालाहणः सालवाहणः शातवाहने ॥
वितस्तौ भरते मातुलिङ्गे हो वसतौ तु वा ॥२१॥

हालेति । हाल इति देशीशब्दोप्ययं पर्यायसौकर्यार्थमुपनिबद्धः । पर्ययोस्तु तस्य लत्वंनिपात्यते ।

[सातवाहनेन विरचितानि]=हालेण विरइआइ ॥ सालाहणो। सालवाहणो ॥

वितेति। एषा तस्य हः स्यात्। स्तस्य थ. ॥ [ वितस्ति ] = विहत्थी ॥ [भरतः]=भरहो ॥ [मातुलिङ्गम् ] = माहुलिंगं ॥

वसताविति। [ वसतिः ] = वसही। वसई ॥२१॥

५ ५६ कातरे काहलः प्रोक्तः पाटेर्णौ फाल फाड च ॥
पलिते तस्य लत्वं वा दस्य डत्वं दहेर्दशेः ॥२२॥

कातरेति। काहलो ॥ पाटेरिति। ण्यन्तस्य पाटेरेतौ स्तः। [ पाटयति ] = फालेइ ॥ फाडेइ ॥

पलितेति। पलिल। पक्षे तलोप। पलिअं ॥

१० दस्येति। दह भस्मीकरणे दश दशने अनयोर्दस्य ड.। दहति चन्द्र ] = डहइ चदो ॥ [ दशति भुजङ्ग ] = डसइ भुअगो ॥२२॥

५७ दष्टे दग्धे दण्ड-दोला-दशने दाह-दम्भयोः ॥
दरे भयार्थे कदन-दर्भयोर्दस्य डो न वा ॥२३॥

दष्टेति। दष्टादिषु भयार्थे च दरशब्दे दस्य डत्व वा स्यात्। [ दष्ट• ] = १५ डट्ठो ॥ [ दग्ध ] = डड्ढो ॥ डक्को इत्यपीष्यते। [ दण्ड ] = डंडो ॥ [दण्ड ]= दंडो ॥ डरो = दर ॥

भयार्थे किम्। ईषदर्थस्य न। [ ईषद्दलितकेसराणि ] = दरदलिअ-केसराइ ॥२३॥

५८ बिन्दोर्हस्य तु वा घत्वमन्यत्रापि तु दृश्यते ॥
२० शिथिरे प्रार्थिते मेथौ थस्य ढो वा निशीथके ॥२४॥

बिन्दोरिति। अनुस्वारात्परस्य हस्य वा घ। [ सिंह ] = सिंघो=सिंहो ॥ [ सहार ] = संघारो ॥

अन्येति। डाहो। दाघो [ =दाघ ] ॥ शिथिरेति। [ शिथिलः ]=सिढिरो। सिढिलो ॥ [ प्रार्थित ] = पड्ढिओ ॥ [ मेथी ]=मेढी ॥

२५ वा इति। छन्दोनुरोधात्स्वार्थे क। [ निशीथ ] = निसीढो ॥ पक्षे हत्वम्। खघथधभां सभाम् इति ह.। निसीहो ॥२४॥

५९ प्रथमे पढुमो पढमो पुढमो पुढुमो पृथिवी पुहवी पुढवी ॥
शिथिले तु मतं सिढिल सढिलं ककुभे कउहो निषधे निसढो ॥२५॥

प्रथमेति। चत्वारि स्यु ॥२५॥

३० ६० अतिमुक्तके तु अणिउंतअस्तथा अइउँतओपि अइमुत्तओपि च ॥
शबरे भवेत्तु समलः समरः सवलस्तथैव सवरश्चरमः ॥२६॥

अतीति । अतिमुक्तकशब्दे तस्य णत्वम् । इकारस्यानुनासिक । मलोप । उकारे बिन्दुः । युक्तादे' परस्य च कस्य लोप इति निपात्यते । तेन अणिउँतअो । अनुस्वारस्य वा परसवर्णः । अणिँउतओ ॥ द्वितीये तु णत्वाभावात्तलोपे पूर्ववच्छेषे अइँउंतओ । अइँउतओ ॥ तृतीये तु मलोपानुनासिकानुस्वाराभावे तलोपकलोपतद्वित्वेषु अइमुत्तओ । इति त्रीणि ॥ ५

शबर इति । बस्य मत्वम् । अन्त स्थीयवस्य मो वास्य वलत्व वेत्यर्थ । समरो । समलो । सवलो । सवरो ॥ २६ ॥

६१ स प्रागिन्दुस्तु चामुण्डा-यमुना-कामुके मलुप ॥
कदल्यां कअली केली करली त्वद्रुमे मता ॥२७॥

सेति । एषा मस्य लोप पूर्वस्य चानुनासिक इति । चाँउण्डा । जँउँणा । १० काँउओ ॥

कदल्यामिति । कअली । केली ॥ द्रुमादन्यत्र करली ॥२७॥

६२ अभिमन्यावहिवण्णू अहिमण्णू चापि अहिमज्जू ॥
अहिवज्जू अहिमञ्जू अहिवञ्जू चेति षट् प्रोक्ताः ॥२८॥

अभिमन्या इति । स्पष्टम् ॥२८॥ १५

६३ यष्टौ स्मृता च लट्ठी पापर्द्धौ चापि पारद्धी ॥
भिसिणी स्त्रियां बिसिन्यां विषमे विसढोथवा विसमो ॥२९॥

स्पष्टम् । भिसिणीति । भिसिणीपत्तम्मि रेहइ वलाआ ॥ स्त्रिया किम् । विसतंतुपेलवाण ॥

विषमे इति । स्पष्टम् ॥२९॥ २०

६४ छाही छाहाकान्तौ छायायां स्याच् शिरा छिरापि सिरा ॥
कबन्धे कमंधः कयंधः प्रदीप्ते पलित्तं कदम्बे कलंबः कअंबः ॥३०॥

छाहीति । तरुच्छाही । तरुच्छाहा ॥ अकान्तौ किम् । [ मुखच्छाया ]= मुहच्छाआ ॥ मुखकान्तिरिति ।

स्यादिति । स्पष्टम् । कमधो । कयधो । २५

कबन्धेति प्रेति । स्पष्टम् । कदब इति । कलवो । कअवो ॥३०॥

६५ तथा नाविओ ण्हाविओ नापिते स्याल्ललाटे ॥
णिडालं णडालं च तुल्यं वा णत्वमादेर्लाङ्गूले लाङ्गले
लाहले तथा ॥३१॥

तथेति । सयोगे ह्रस्वता । णंगूलं लंगूल ॥ णंगलं । लगलं ॥ णाहलं । ३० लाहल ॥३१॥

६६ सिविणः सिमिणः स्वप्ने नीमी नीवी च नीविषु ॥
करवीरे कणवीरः पर्यायो स्यात्पडायाणं ॥३२॥

सिमिणेति । [ स्वप्नः ] = समिणो । सिविणो ॥ नीमी इत्यादि । स्पष्टम् ॥३२॥

५ ६७ पल्लाणं च स्थूले थोरं सुण्हा सुसा स्नुषायां च ॥
कइवाहं कइअवं भवेत्कतिपयस्य तु ॥३३॥

६८ पाषाणे पासाणोथो किरिः किडी स्यातः ॥
भेरे भेडो निम्बे णिम्बो लिबोथ वम्महो मदने ॥३४॥

अथेति । मन्मथशब्दस्य वम्मह इत्यादेशो निपात्यते । [ मन्मथशरा ] =
१० वम्महसरा ॥३४॥

६९ स्यात्कदर्थितशब्दस्य कवट्टिअ-कवट्टिदौ ॥
उत्तरीये वोत्तरिज्जं दिवसे दिअहः स्मृतः ॥३५॥

स्यादिति । दस्य व थस्य ट । तस्य च वा लोपो निपात्यते । कवट्टिओ । कवट्टिदो ॥

१५ उत्तेति । पक्षे उत्तरीअं ॥

दिवेति । सस्य ह. निपात्यते । दिअहो ॥३५॥

७० आपीडे त्वामेलश्चामेडश्चापि आवेलः ॥
आवेडोप्यथ नीपे णीमो णीवोपि विज्ञेयः ॥३६॥

आपीडेति । पस्य वत्वं वा पक्षे तु पो व स्थित एव । ईकारस्य च एडस्य
२० लत्व च वा निपात्यते ॥

अथेति । पस्य मत्व वा निपात्यते । पक्षे वत्व स्थितमेव ॥३६॥

॥ इति असंयुक्तादेशप्रकाश ॥

— ० —

## तृतीयः प्रकाशः

# संयुक्तादेशप्रकाशः

७१ तीक्ष्णस्य तिण्हं तिक्खं च जानातेर्ज्ञो जणौ क्वचित् ॥
आविनञ्पूर्वकस्य ज्ञो न जत्वं केवलस्य च ॥
अभिज्ञकर्मोपपदकान्तस्य ज्ञस्य णस्य णुः ॥१॥

तीक्ष्णेति ॥ स्पष्टम् ॥

जानेति ॥ ज्ञ इति संयोगमात्रस्येत्यर्थ । ज्ञानम् =जाणं । णाणं ॥ मनोज्ञम्= ५
मणोज्ज । मणोण्णं ॥ आज्ञा = अज्जा । अण्णा ॥

क्वचित्किम् । विज्ञानम् = विण्णाण ॥

आवीति । [ आज्ञा ] = आणा ॥ [ विज्ञानम् ] = विण्णाणं ॥ वैज्ञा-
निक = वइण्णाणिओ ॥ अज्ञ = अण्णो ॥ जानाति ज्ञ = णो ॥

अभिज्ञेति । अभिज्ञसम्बन्धिनस्तथा कर्मण्युपपदे विहितकप्रत्ययान्तस्य जानाते- १०
र्णस्य णुरिति आदेश । [अभिज्ञ ]=अहिण्णू । [सर्वज्ञ ]=सव्वण्णू ॥ [आगमज्ञ ]=
आअमण्णू । [ कृतज्ञ ]=कअण्णू ॥ ज्ञो जाणमुणाविति जाणादेशेपि यो णस्तस्या-
पि णु भवति । [बहुज्ञ ]=बहुज्जाणुओ ॥ स्वार्थे क । तथा च सप्तशती-प्रयोग ॥

हिअअट्ठिअमणुक्कं ओतुण्णमुहिं पिअ पसाअंता ।
अवरद्धस्स विणहुदे बहुजाणुअ रूसिउं सक्कं ॥ गुणापतकायां च— १५
ससारो कामाओ कामो णिच्च हइ जुवइरअणाओ ।
ज तम्मि तेण सारं मणिअं बहुजाणुण्णाफुडं ॥

अनयोरेवेति किम् । प्राज्ञ = पण्णो ॥ विज्ञ = विण्णो ॥ [ मनोज्ञ. ] =
मणोण्णो ॥ णस्य किम् । [ अभिज्ञ = ] अहिज्जो । [ सर्वज्ञ = ] सव्वज्जो ॥१॥

७२ प्रावरणे पावरणं पाउरणं पगुरणं ॥ २०
चापि शुष्के सुक्खं सुक्कं स्कन्दे क्खंदोथ कंदोपि ॥२॥

प्रावरणेत्यादि । स्पष्टम् ॥२॥

७३ स्थाणोः स्तम्भे खाणू हरे तु थाणू विनिर्दिष्टः ॥
स्तम्भे खभो थंभो स्तभ्नातेः थंभ-ठंभौ च ॥३॥

स्तम्भेति । स्तम्भ रोधन इत्यस्य स्पन्दाभावमुत्तेरेतौ स्तः । [ स्तम्भ ] = २५
थंभो । ठंभो ॥ सात्त्विको भाव. स्तभ्यते = थंभिज्जइ । ठंभिज्जइ ॥३॥

७४ वा भाजने राजकुले दनुजे च जशब्दलुक ॥
दनुजस्यासमासे तु न जशब्दो विलुप्यते ॥४॥

वेति। एषु जकाराकारसंघस्य लुक् स्यात् । पक्षे कगचेति कजयोर्ल्लोपः। [ भाजनम् ] = भाण । भाअणं ॥ [ राजकुलम् ] = राउलं । राअकुलं ॥
५ [ दनुजराज ] = दणुराओ । दणुअराओ ॥ [ दनुजवध ] = दणुवहो । दणुअवहो ॥

दनुजेति । दणुजो ॥४॥

७५ लुग्वा साचोर्व्याकरणे प्राकारे चागते कगोः ॥
कालायसे किसलये हृदये वा यशब्दलुक ॥५॥

१० लुग्वेति । एषामच्सहितयो कगयोर्वा लुक् । युक्ताधो मनयां प्राय इति वलोप । [ व्याकरणम् ] = वारण ॥ पक्षे कलोप । वाअरण ॥ सर्वत्र लवरामिति रलोप । [ प्राकार ] = पारो । पक्षे पाआरो ॥ [ आगत ] = आओ । आअओ ॥

कालेति । शब्दग्रहण साचो लोपार्थम् । [ कालायसम् ] = कालास ।
१५ कालाअसं ॥ [ किसलयम् ] = किसल । [ किसलअ ॥ [ हृदयम् ] = हिअ । हिअअ ॥५॥

७६ दुर्गादेवीपादपीठयोः पादपतने तथा ॥
साचोनादेर्दस्य लुग्वा तथैवोदुम्बरेपि च ॥६॥

दुर्गेति । रलोपे गस्य द्वित्वम् । [ दुर्गादेवी ] = दुग्गावी । दुग्गाई ।
२० दुग्गादेवा ॥ पो व । ठस्य ढ । [ पादपीठम् ] = पावीढ । पाअवीढ ॥ [पादपतनम् ] = पावडण । पाअवडण ॥ [ उदुम्बर ] = उम्बरो । उउम्बरो ॥

अनादेरित्युक्ते दुर्गाशब्दे न स्यात् ॥६॥

७७ यावत्तावद्देवकुलावर्त्तमानावटेषु च ॥
प्रावारके जीवितैवमेवयोर्व्वावशब्दलुक् ॥७॥

२५ यावदिदि । लोपोन्त्यस्य हल । [यावत्=] जा । जाव ॥ [ तावत् ]=ता । ताव ॥ [देवकुलम् ]= देउलं ॥ रलोप । तस्य द्वित्वम् । सयोगे ह्रस्वता । [आवर्तमान ]=अत्तमाणो । आवत्तमाणो ॥ टस्य ड । [ अवट ] = अडो । अवडो ॥ [ प्रावारक ]=पारओ । पावारओ ॥ [ जीवितम् ]= जीअं । जीविअ ॥ [ एवमेव ] = एमेव । एवमेव ॥७॥

३० ७८ शक्ते मुक्ते च दष्टे च कत्वं युक्तस्य वा भवेत् ॥
रुग्णस्य लुक्को रुग्गोपि गृहस्य तु घरोपतौ ॥८॥

शक्त इति । एषां संयुक्तस्य को वा । [ शक्त ]=सक्को । पक्षे संयोगा-देर्लोप । तस्य द्वित्वम् । सत्तो ॥ [ मुक्तः ]=मुक्को । मुत्तो ॥ डक्को ॥ डट्ठो ॥ दट्ठो=[ दष्ट ]॥

रुग्णेति । स्पष्टम् ।

गृहेति । [ गृहम् ] = घर ॥ [ गृहस्वामी ] = घरस्सामी ॥ पत्तौ तु ५ गहवई ॥८॥

७९ रक्ते रग्गो रत्तो शुल्के सुक्कं च सुंगं च ॥
प्रत्यूषे पच्चूसः पच्चूहः त्यस्य चोचैत्ये ॥९॥

रक्त इति । स्पष्टम् । शुल्क इति । स्पष्टम् । प्रत्येति । पच्चूसो । पच्चूहो ॥ त्यस्येति । त्यशब्दस्य च-आदेश चैत्य वर्जयित्वा ॥ [ सत्यम् ] = सच्च ॥ १० [ अमात्य ] = अमच्चो ॥ [ प्रत्यय ] = पच्चओ ॥ आदेशत्वाद् द्वित्वम् । चैत्ये तु चइत्त ॥९॥

८० ह्रस्वात्परेषा थ्यश्चत्सप्सानां छत्वमनिश्चले ॥
वोत्सवोत्सुकसामर्थ्ये स्पृहायान्तु छिहा प्पहा ॥१०॥

ह्रस्येति । [ पथ्यम् ] = पच्छ ॥ [ मिथ्या ] = मिच्छा ॥ १५

श्च—[ पश्चिमम् ] = पच्छिम ॥ [ पश्चात् ] = पच्छा ॥

त्स—[ उत्साह ] = उच्छाहो ॥ [ सवत्सर ] = सवच्छलो ॥ [मत्सर ] = मच्छलो ॥

प्स—[ लिप्सते ] = लिच्छइ ॥ [ जुगुप्सति ] = जुगुच्छइ ॥ [ अप्सर ] अच्छरा ॥ ह्रस्वात् किम् । [ उत्सारित ] = ऊसारिओ ॥ २०

निश्चले तु न । [ निश्चलः ] णिच्चलो ॥

वोत्सेति । एषु वा छ । [ उत्सवः ] = उच्छओ ॥ ऊसओ ॥ [ उत्सुक ]= उच्छुओ । ऊसुओ ॥ [ सामर्थ्यम् ] = सामच्छ । सामत्थं ॥

स्पृहेति । [निस्पृह.]=निच्छिहो । निप्पहो ॥१०॥

८१ शमी-शाव-सुधा-षट्सु शस्य छत्वं विधीयते ॥ २५
कृत्तेः किच्ची चत्वरे चच्चरं स्याद्दक्षेरिच्छो वा छमा भूमिरेव ॥११॥

शमीति । [ शमी ] = छमी ॥ [ शाव ] = छावो ॥ [ सुधा ] = छुहा ॥ [ षष्ठ ] = छट्ठो ॥ [ षट्पाद ] = छप्पओ ॥ [ षण्मुखः = ] छम्मुहो । कृत्तेरित्यादि । स्पष्टम् । ऋक्ष इति । पक्षे रख । रिक्खो ॥

छमेति । भूमावेवार्थे क्षमाया छ स्यादन्यत्र । [ क्षमा ] = छमा ॥ अन्यत्र ३० खमा शान्ति ॥११॥

८२ इक्षोरुच्छू स्यात्कक्खोऽपि पक्खो
पक्षे वृक्षे स्यात्तु रुक्खोऽपि वच्छो ।
स्याच्च छोऽक्षि-लक्ष्मी-क्षुर-कुक्षि-दक्ष-
कक्षा-क्षुर-प्रेक्षणके च कच्छे ॥१२॥

५ ८३ क्षेत्र-क्षुधा-क्षीण-समक्षिका-क्षुत्
क्षणेषु कौक्षेयक-वक्षसोश्च ।
सदृक्षोत्क्षारकेषु क्षीरक्षारक्षरत्क्षितौ
इक्षोः क्से च्छे प्रेक्षणक-क्षोण्यक्ष-क्षपित-क्षते ॥१३॥

इक्षोरिति । उच्छू ।

१० स्यादिति । एषु क्षस्य छ. स्यात् । [ अक्षि ] = अच्छि ॥ [ लक्ष्मी ] = लच्छी ॥ [ क्षुर ] = छुरो ॥ [ क्षुत् ] = छुहा ॥ इत्यादि ॥१२।१३॥

८४ स्थगिते छइअं खीरमिक्खूसारिक्खमार्षके ॥
वृत्तस्य वट्टं वुत्तं च प्रात्पअट्ट पउत्तवत् ॥१४॥

स्थगित इति । आर्षे प्राकृते क्षीरेक्षुसदृक्षाणामेतान्यपि रूपाणि स्यु ॥

१५ वृत्तेति । [ वृत्त = ] वट्टो । वुत्तो ॥

प्रादिति । प्रात्परस्यापि वृत्तस्य एते रूपे स्त । पअट्टो । पउत्तो ॥१४॥

८५ स्यान्मट्टिआ मृत्तिकायाः पत्तने पट्टणं स्मृतम् ॥
वृन्तस्य वेंटं वोंटं च विंटं दिही धिई धृतेः ॥१५॥

स्यादित्यादि । स्पष्टम् ॥१५॥

२० ८६ मृषाशब्दे मुसा मूसा मोसा र्तस्य तु टः स्मृतः ॥
धूर्त्तकीर्त्योर्वर्त्तिवार्त्ता-वर्त्तिकार्तवकार्त्तिके ॥१६॥

मृषेति । [ मृषावाद = ] मुसावाओ । मूसावाओ । मोसावाओ ॥

र्तस्येति । र्तस्य तु ट । [ कैवर्त ]=केवट्टो ॥ [ वर्त्ती ]=वट्टी ॥ [वर्तुलम्=] वट्टुलं । नर्तकी=नट्टई ॥

२५ धूर्तेत्यादि । धूर्त्तादिषु तु रलोपे द्वित्वे । धुत्तो । कित्ती ॥१६॥

८७ वार्त्तिकोत्कीर्त्तनार्त्तेषु कर्तरी-मूर्त-मूर्तिषु ।
आनिस्सं-प्रतिपूर्वेषु वृत्तेः शानजकानयोः ॥१७॥

आ-निस्-सं-प्रति एतदुपसर्गपूर्वाणि वृत्ते रूपाणि शानच्-अक-अन-इत्येवं प्रत्ययान्तानि । [आवर्तमान=] आवत्तमाणो । [ निवर्तमान. = ] निव्वत्तमाणो ।

३० [संवर्तमान = ] संवत्तमाणो । [ प्रवर्तमान = ] पवत्तमाणो । निवत्तमाणो । एवम् आवत्तओ आवत्तणमित्यादि ॥ अत्रोपसर्गस्य भिन्नपदत्वविवक्षया वलोपाभाव ॥१७॥

८८ मूहूर्त्ते कर्त्तने कार्त्तस्वरे च र्त्तस्य नैव टः ॥
विसंस्थुलेस्थनि च ठो वार्थे स्त्रीवे चतुर्थके ॥१८॥

विसंस्थुलेति । विसठ्ठुलं । अट्ठी । यलोपाभावः ।

वार्थे इति । एषु संयुक्तस्य ठो वा स्यात् । [ अर्थः ] = अट्ठो प्रयोजनम् ॥
अत्थो धनम् । [ स्त्यानम् ] = ठीणं । पक्षे स्तस्य थः थीणं । स्तनमिति ५
निपातनात् संप्रसारणम् । सेवादित्वात् द्वित्वे ह्रस्वे थिणं । ठिणं । [ चतुर्थ ] =
चउट्ठो । चतुत्थो ॥३।१८॥

८९ ष्टस्य ठोनुष्ट्रसंदष्टेष्टासु गर्ते तु डः स्मृतः ॥
पृष्ठस्य पिट्ठी पुट्ठी च वट्ठं समासपदस्य तु ॥१९॥

ष्टस्येति । उष्ट्रादिवर्ज्जेषु ष्टस्य ठः स्यात् । [ मुष्टि ] = मुट्ठी ॥ [ दृष्टः ] = १०
दिट्ठो ॥ [ इष्ट. = ] इट्ठो ॥ उष्ट्रादौ तु ष-र-लोपौ । [ उष्ट्रः ] = उट्टो ।
[ संदष्ट ] = संदट्टो ॥ [ इष्टा ] = इट्टा ॥

गर्त्त इति ॥ [ गर्त्त ] = गड्डो । गड्डा ॥

पृष्ठेति । उत्तरपदभूतस्य वट्ठ इत्यादेशः । [महीपृष्ठम् ] = महीवट्ठं ॥३।१९॥

९० संमर्द-छर्दि-विच्छर्दि-कपर्दक-वितर्दिषु ॥ १५
मर्दिते च र्दस्य डः स्याद् गर्दभे र्दस्य डस्तु वा ॥२०॥

समर्देति । [ संमर्द. ] = समड्डो ॥ [ छर्दि. = ] छड्डी ॥ [ विच्छर्दि ] =
विछड्डी ॥ [ कपर्दक ] = कवड्डुओ ॥ [ वितर्दिः ] = विअड्डी ॥ [ मर्दित. ] =
मड्डिओ ॥

गर्दभ इति । भो ह ॥ [ गर्दभः ] = गड्डही । गद्दहो ॥३।२०॥ २०

९१ स्तब्धस्य ठड्ढो वृद्धस्य वुड्ढो विड्ढ इति द्वयम् ॥
विदग्धदग्धयोर्ढत्वं ध्वजस्य तु झओ धओ ॥२१॥

स्तब्धेति । ठड्ढो ॥

वृद्धेति । वुड्ढो । पवर्गीयादि. । विड्ढकइणिरूविअं [ =वृद्धकविनिरूपितम् = ] ।
वृद्धस्य इति । ऋ-कत्यन्तयोरेकदेशानुकरणम् । अकार उच्चारणार्थ. । तेन वृद्धेरपि २५
वुड्ढी विड्ढी इति स्यात् ॥

विदग्धेति । [ विदग्ध. ] = विअड्ढो ॥ [ दग्धः ] = दड्ढो ॥ ध्वजस्येति ।
स्पष्टम् ॥३।२१॥

९२ श्रद्धा-मूर्द्धार्द्ध-श्रद्धेर्ध्वा सड्ढा मुड्ढाऽड्ढ-इड्ढयः ॥
मन्योर्मन्नू च मण्णू च स्तवस्य तु थवो तवो ॥२२॥

अर्द्धेति । एषामेषि क्रमाद्धा स्युः । [ श्रद्धा ] = सड्ढ । सड्ढा ॥ [ मूर्द्धा ] =

१ प्रा० च०

मुड्डा । मुद्धा ॥ [ अर्धम् = ] अड्ड । अद्ध ॥ [ ऋद्धि ] = इड्डी । इद्धी ॥
मन्योरित्यादि । स्पष्टम् ॥१।२२॥

९३ पर्यस्ते पल्लत्थो पल्लट्टो चाप्यथोत्साहे ॥
उत्थारो उच्छाहो आश्लिष्टे चापि आलिद्धो ॥२३॥

५ ९४ चिह्ने चिराहं चिंधमिधं भष्मो भस्सोपि भस्मनि ॥
बृहस्पतेर्भमस्सई भयप्पई भयप्फई ॥२४॥

९५ वहस्सई वहप्पई वहप्फई विहस्सई ॥
विहप्पई विहप्फई वुसस्सई वुहप्फई ॥२५॥

९६ वनस्पतेर्बणप्फई वणस्सई भणप्फई भणस्सई ॥२६॥

१० ९७ भीष्मे भिप्फोथ सेलिम्हो सेप्फोपि श्लेमणि स्मृतः ॥
ताम्रे तु तंबिरं तंबमात्रे त्वंबं तथांविरं ॥२७॥

९८ विह्वले भिब्भलोपि स्यात् विभलो विहलोपि च ॥
स्यादुब्भमुद्धमूर्ध्वे काश्मीरे कभरोपि कुसुमीरो ॥२८॥

९९ कंभारोपि च पर्यन्ते स्तः पेरंत-पज्जंतौ ।
१५ अच्छरिअमच्छरिज्जं स्यादाश्चर्येच्छरीअं च ॥२९॥

१०० अच्छअरं चाच्छेरं पल्यङ्केथापि पलिअंको ॥
बाष्पे बप्फो बाहोश्रुणि तूहं तित्थमपि तीर्थे ॥३०॥

अच्छरिअ इति । अच्छरिअ । अच्छरिज्ज । अच्छरीअ । अच्छेर ॥१।३०॥

१०१ कार्षापणस्य तु कहावणो काहावणोपि च ॥
२० दुःखे दुह च दुक्ख दक्षिणे दाहिण-दक्खिणौ ॥३१॥

१०२ ब्रह्मचर्ये बम्हचेरं स्याद्बम्हचरिअं तथा ॥
अन्ते इत्यन्तरः प्रोक्तं अंतःपुरम् अंतेउरं ॥३२॥

१०३ अन्तश्चारी अंतेआरी क्वचिन्नान्तर्गतादिषु ॥
शय्यायां सेज्जा स्याद्वल्यां वेली च मेत्तमपि मात्रे ॥३३॥

२५ अन्ते इति ॥ अन्त पुरम्=अतेउर ॥ अन्तश्चारी=अतेआरी ॥ क्वचिदिति ।
अन्तर्गतम् = अतग्गअ ॥ अतव्वासं = [ अन्तवर्षम् ] ॥ अतोवीसमवासिआणं =
अन्तर्विश्रम्भवासितानाम् ॥३।३२॥

मेत्तमिति । [ क्षणमात्रम् ] = खणमेत्त । एद्दहमेत्तत्थणिआ=एतावन्मात्रस्त-
नीत्यर्थ ॥३।३३॥

३० १०४ एत्तिअ-तेत्तिअ-जेत्तिअ-केत्तिअमेतत्तदोर्यदोश्च किमः ॥
एद्दहजद्दहतद्दहकद्दह इत्यप्यवेहि परिमाणे ॥३४॥

एत्तीति । एतावदादीनामेते निपाताः । एतत् परिमाणमस्य एत्तिअ ॥३।३४॥

१०५ सौन्दर्य्ये सुंदेरं सुंदरिअं तूरमपि तौर्ये ॥
शौण्डीर्ये सुंडीरं धैर्य्ये धीरं च धिज्जं च ॥३५॥

१०६ सौकुमार्य्ये सोअमल्लं कोहंडी कोहलीति च ॥
मार्जारोपि च मजारो मंजरो बंजरोपि च ॥३६॥ ५

कोहंडीति । कुष्माण्ड्यामित्यर्थः ॥

मजार इति । मार्जारे इत्यर्थः ॥३।३६॥

१०७ युधिष्ठिरे जुहुट्ठिलो जुहिट्ठिलोपि वृश्चिके ॥
तु विञ्छिअोपि बिञ्चुओ हरे हरोपि हीरओ ॥३७॥

१०८ महरट्ठो मरहट्ठो थेरो ठेरोपि च स्थविरे ॥ १०
पूर्वे पुरिमो पुव्वो प्रस्तावे पत्थवोपि पत्थावो ॥३८॥

महरट्ठेति । महाराष्ट्रे इत्यर्थः ॥३।३८॥

१०९ पक्के पक्कं पिक्कं स्यादाआरिसोपि आअंसो ॥
भिन्दिपाले दस्य डत्वं प्रभावे ह्रस्वतापि वा ॥३९॥

स्यादाआरिस इति । आदर्शे इत्यर्थः ॥ १५

भिन्दीति । भिंडिपालो । प्रभावे । [ प्रभाव ] = पहवो । पहावो ॥३।३९॥

११० श्म-ष्म-स्मह्मां पक्ष्मणश्च म्हो न रश्मि-स्मरादिषु ॥
श्न-ष्ण-स्न-ह्न-ह्ण-क्ष्ण एषां ण्हः स्याद् ह्लस्य ल्ह इत्यपि ॥४०॥

एषां संयुक्तस्य मकाराक्रान्तो ह स्यात् । कुश्माण = कुम्हाणो ॥ ग्रीष्म = गिम्हो ॥ ऊष्मा=उम्हा ॥ अस्मादृश =अम्हारिसो ॥ विस्मयः= विम्हओ ॥ ब्रह्मा= २० बम्हा ॥ सुह्मा =सुम्हा ॥ पक्ष्मल = पम्हलो ॥ [ पक्ष्मलक्ष्मी ]=पम्हलच्छी ॥

नेति । [ रश्मि ] = रस्सी ॥ [ स्मर ] = सरो ॥ [ सस्मारितम् = ] = सस्मारिअ ॥

श्नेति । श्न-ष्ण-स्न-ह्न-ह्ण-क्ष्ण एषां ण्ह स्यात् ॥ प्रश्न = पण्हो ॥ शिश्न = सिण्हो ॥ विष्णु = विण्हू ॥ उष्ण = उण्हो ॥ कृष्ण = कण्हो ॥ स्नात = २५ ण्हाओ ॥ प्रस्नुत = पण्हुओ ॥ वह्नि = वण्ही ॥ जाह्नवी=जण्हवी ॥ पूर्वाह्ण = पुव्वण्हो ॥ [अपराह्णः]=अवरण्हो ॥ तीक्ष्णम्=तिण्ह ॥ श्लक्ष्णम्=सण्ह ॥

ह्मे तु मस्यभ इत्यपि । [ ब्राह्मण ] = बंभणो बम्हणो ।

ह्लस्येति । कह्लार. = ] कल्हारो । [ प्रह्लाद. = ] पल्हाओ ॥३।४०॥

१११ सूक्ष्मे तु सुण्हं सण्हं च सुहुमं चेति कीर्त्तितम् ॥ ३०
आचार्य्यस्य त्वाअरिओ भवेदाइरिओपि च ॥४१॥

११२ उपाध्याये उवज्झाश्र ओज्झा-ओज्झाश्र इत्यपि ॥
आर्द्रशब्दे त्वल्लमोल्लमद्दमोद्दं च कीर्त्तितम् ।४२॥
उपेति । [ उपाध्यायः ] = उवज्झाओ । ओज्झाओ । उज्झाओ ॥ अल्लं । ओल्लं । अद्दं । ओद्दं ॥३।४२॥

५ ११३ विष्णौ कृष्णस्य कण्हः स्यात् कसणो कसिणोसिते ॥
गुच्छे तु गुंछो गोंछोपि मिलिच्छो म्लेछ ईरितः ॥४३॥
विष्णाविति । कण्हो । श्यामगुण इत्यर्थ. ॥३।४३॥

११४ मृदङ्गे मिइंगो मिअंगो मुइंगो मुअंगो मृगे स्यान्मओथो मिओपि ॥
तटाके तलाओ तडाओथ चाओ भवेस्त्यागशब्दे मुरुक्खोपि
१० मूर्खे ॥४४॥
मुरुक्खेति । अपि शब्दात्पक्षे मुक्खो ॥३।४४॥

११५ उपयोगे उज्जोओ ओज्जोओ स्यात्तथैव उवजोओ ॥
खल्वाटे खल्लिडो धिट्ठो धट्ठोपि धृष्टे स्यात् ॥४५॥

११६ अग्नेरगिणयगणयग्गी शार्ङ्गे सारंगमीरितम् ॥
१५ श्लाघायान्तु सलाहा स्याद्रत्ने तु रयणं स्मृतम् ॥४६॥
अग्नेरिति । अगणी । अगिणी । अग्गी । इति त्रय स्यात् ॥३।४६॥

११७ स्नेहे तु णेहो सणेहो सिणेहोपि प्रकीर्त्तितः ॥
कृत्स्ने तु कसिणो ज्ञेयः क्रियायां किरिआ किआ ॥४७॥

११८ तप्ते तविओ तत्तो वज्रे वइर च वज्जं च ॥
२० भव्ये भव्वं भविअं चैत्ये चइओ चेइअ च दिट्ठिआ दिष्ट्या ॥४८॥

११९ श्री-ह्रीर्ह्री अर्हन्त्याद्धलः प्रागिल् लान्ते च शर्षयोस्तु वा ॥
हर्षे परामर्श-संघर्षधर्षके अमर्शसंकर्षणतर्षसर्षपे ॥४९॥
श्रीति । एषु सयोगेष्वन्त्याद्धल पूर्वमिकार आगम स्यात् । सिरी ॥ हिरी ॥ अर्हति = अरिहइ ॥ अरिहो ॥
२५ लान्त इति । लान्ते च सयोगेन्त्याद्धल पूर्वमित्व स्यात् । क्लिष्ट = किलिट्ठो ॥ म्लानम् = मिलाण ॥ क्लान्त = किलतो ॥
र्शा इति । अनयो सयोगयोरन्त्यात्पूर्वमिद्वा । अमर्श. = अमरिसो ॥ दर्श = दरिसो ॥ हर्ष = हरिसो ॥ [ परामर्शः ] = परामरिसो ॥३।४९॥

१२० अकर्षवर्षेप्यथ कर्षके च संघर्षवर्षादिषु नित्यमिः स्मृतः ॥
३० आकर्षकः आआसअ आकासअ आगरिसओपि स्यात् ॥५०॥
हर्षेति । स्पष्टम् ॥

आकर्षेति ॥ आआसओ । आआसओ । आअरिसओ ॥३।५०॥

१२१ वर्षे वरिसं वासं वासा वरिसा च वर्षासु ॥
स्पर्शे फरिसो फंसो दंसणमपि दरिसणं दर्शे ॥५१॥

दंसणेति । दर्शे कृतगुणे दशधातो रूपे । तेन दंसिओ । दरिसिओ । दंसणीअ । दरिसणीअ ॥३।५१॥ ५

१२२ चौर्य्य-सूर्य-स्थैर्य-धैर्य-भार्या-गाम्भीर्य-वीर्ययोः ॥
सौन्दर्याचार्यवर्यादौ र्यस्य स्याद् रिय इत्ययम् ॥५२॥

चौर्य्येति । चोरिअ । सूरिओ । थेरिअं । धीरिअं । भारिआ । गंभीरिअं । गहीरिअं । वीरिअं । सुंदरिअं । आअरिओ । वरिओ ॥३।५२॥

१२३ अर्हे अरहो अरिहो अरुहो पद्मे तु पउमपोम्मौ स्तः ॥ १०
छद्मनि छउमं छइं भ्रमरे भसलोपि भमरोपि ॥५३॥

पद्म इति । [ पद्मम् ] = पउम । पोम्म ॥ [ पद्मराग ] = पोम्मराओ ॥ भ्रमरेति । भसल सस्कृतोप्यस्ति ॥३।५३॥

१२४ द्वारे देरं दारं वारं दुआरमपि जीआ ज्या ।
घस्मरसद्मवेश्मादौ युक्तेन्त्यात्पूर्वमुद्दलः ॥५४॥ १५

जीआ इति । जीआ ॥

घस्मरेति । एवंप्रकारेषु संयोगस्यान्त्यव्यञ्जनात्पूर्वमुत्वं स्यात् ॥ [घस्मर =] घसुमरो ॥ [ वेश्म = ] वेसुम ॥ सद्म = सउम ॥३।५४॥

१२५ स्वश्वसोः सुवोसमासे क्रिया इत्थी च त्थी इति ।
वनितायास्तु विलया हलुअं लहुअं लघोः ॥५५॥ २०

स्वश्वेति । असमस्तयो स्वश्वस् इत्येतयो सुव इत्यादेश स्यात् ॥ स्वे जना = सुवे जणा ॥ श्व कृतम् = सुवे कअं । समासे तु स्वजन = सजणो ॥ क्रिया इत्यादि स्पष्टम् ॥३।५५॥

१२६ हरिताले हलिआरो हरिआलः स्यात् ह्रदे द्रहोपि दहो ।
आलाने त्वाणालं वैदूर्ये स्यात्तु वेरुलिअं ॥५६॥ २५

१२७ दंष्ट्राया अपि दाढा अचलपुरे स्याच्च अलचउरं ।
वाराणस्या करेणौ च व्यत्ययो रणकारयोः ॥५७॥

वारा इति ॥ [ वाराणसी = ] वाणारसी । [ करेणु = ] कणेरू ॥३।५७॥

१२८ स्तोकस्य थोक्कं थोवं च थोरं च थोअं च कीर्तितम् ॥
दुहितुर्धूआ दुहिआ बहिणी भइणी भगिन्याः स्यात् ॥५८॥ ३०

स्तोकादि स्पष्टम् ॥३।५८॥

१२९ मातुः श्वसुर्माउसिया माउच्छा स्यात्पिउसिआपि पिउच्छा ॥
मलिने मइलं उभये अवहं उवहं च उहअं च ॥५९॥
स्यादिति । पितृष्वसुरिति शेषः ॥३।५९॥

१३० शुक्तेः सिप्पी सुत्ती छुप्ते छिक्कोपि छुत्तोपि ॥
५ आरब्धे त्वारद्धो आढत्तो स्यात्पदातेस्तु ॥६०॥

१३१ पाइक्कोपि पआई बहिसो वाहं च वाहि च वाहिर च स्यात् ॥
अधसो हेट्ठं तिरसस्तिरिच्छि तिरिआ इति त्वार्षे ॥६१॥
अन्यत्स्पष्टम् । तिरस इति ॥ [ तिर्यक् प्रेक्षते = ] तिरिच्छि पेच्छइ ॥
[ तिर्यक् गच्छति = ] तिरिआ गच्छइ ॥३।६१॥

१० १३२ स्यात्सिआ ईषतस्त्वीसि स्यात्कूरो वास्योपसर्जने ॥
निर्माल्ये ओमाल निम्मल्लमपि लुक् पदादपेर्वादेः ॥
अपि शब्दस्यै वा स्यात् सम्बोधन एव नान्यत्र ॥६२॥
स्यादिति । स्यादित्यस्य सिआ-आदेश स्यात् । [ स्यादेवम् = ] सिआ एवं ॥

१५ ईष इति ॥ ईषदित्यस्य ईसि स्यात् ॥ [ ईषत् चुम्बितानि = ] ईसि चुम्बिआइ ॥

वेति । गौणत्वे ईषदित्यस्य कूर आदेशो वा स्यात् । चिचव्व कूरपिक्का = चिञ्चेव ईषत्पक्का । पक्षे ईसि पिक्का ॥

लुगिति । पदात्परस्यापेरव्ययस्यादेर्लुग्वा स्यात् ॥ [ तमपि = ] तपि ।
२० तमवि ॥ [ किमपि = ] किपि । किमवि ॥ [ केनापि = ] केणवि । केणावि ॥
इह अपिशब्दस्य पलोपे अइ मअणिए [ = अपि मदनिके ] इति सिद्धम् ॥

सम्बोधने च ऐ इति निपातान्तरमेव ॥ ऐ बीहेमि ॥ ततश्च अपि शब्दस्य ऐ अइ इत्यादेशौ न विधेयौ ॥३।६२॥

१३३ तिः स्यादितेः स्वराद् द्विः स्तस्यादथादेस्तिइतेरिअः प्रोक्तः ॥
२५ ति इति ॥ इति शब्दस्य ति इत्यादेश. स्यात् । [ किम् इति = ] किति ॥ [ दृष्टम् इति = ] दिट्ठति ॥

स्वरादिति । इते तकारस्य स्वरात्परस्य द्वित्वं स्यात् । [ तथा इति = ] तहेत्ति ॥ [ नदी इति = ] = णइत्ति ॥ [ प्रिय इत्ति = ] पिओत्ति ॥ [ पुरुष इति = ] पुरिसोत्ति ॥

३० स्वरात् किम् । [ न युक्तमिति = ] ण जुत्तति ॥

अथेति । वाक्यस्यादौ स्थितस्येते इअ इत्यादेश स्यात् ॥ इति राजश्री-

प्रवरसेनविरचिते रावणवधे महाकाव्ये = इअ राजसिरिप्पवरसेणविरइए रावणवहे महाकव्वे ॥

आदेर्दीर्घो वासमृद्धिप्रतिपत्प्रतिसिद्धिसु ॥६३॥
१३४ अस्पर्शे च प्ररोहे च तथा वर्णशतेपि च ॥
प्रसिद्धौ प्रकटे चैव चतुरब्धिप्रसुप्तयोः ॥६४॥ ५
१३५ मनस्विन्यभिजातौ च प्रतिस्पर्द्धि प्रवासिनोः ॥
परकीये प्रवचने सदृक्षचतुरन्तयोः ॥६५॥

आदेरिति ॥ अत इत् ॥ [ समृद्धि. = ] समिद्धी । सामिद्धी ॥ तो डः । [ प्रतिपत् = ] पाडिवआ । पडिवआ ॥ [ प्रतिसिद्धि'=] पडिसिद्धी । पाडिसिद्धी ॥ [ अस्पर्श =] अफसो । आफसो ॥ [प्ररोह ] = परोहो । पारोहो ॥ [वर्णशतम्=] १० वण्णसअ । वाणसअं ॥ [प्रसिद्धि'=] पसिद्धी । पासिद्धी ॥ [ प्रकटम् = ] पअडं । पाअडं ॥ [चतुरब्धिः = ] चउरद्धी । चाउरद्धी ॥ [प्रसुप्तः=] पसुत्तो । पासुत्तो ॥ [ मनस्वी = ] मणसी । माणसी ॥ [ मनस्विनी =] मणंसिणी । माणसिणी ॥ [ प्रतिस्पर्द्धी = ] पडिप्फद्धी । पाडिप्फद्धी ॥ [ अभिजाति. ] = अहिआई । आहिआई ॥ [ प्रवासी = ] पवासू । पावासू ॥ [ परकीयम् = ] परकेरं । १५ पारकेर ॥ पारक्कं । [प्रवचनम् =] पवअण । पावअण ॥ [ सदृक्षम् =] सरिच्छं । सारिच्छ ॥ [ चतुरन्तम् = ] चउरतं । चाउरत ॥३।६५॥

१३६ व्यलीके विलिअ प्रोक्तं ह्यशब्दे व्यत्ययो ह्लोः ॥
व्यजने विअण प्रोक्त कृपणे किविणो मतः ॥६६॥

ह्येति । व्यत्ययो वैपरीत्यम् ॥ गुह्यम् = गुज्झं । गुय्हं ॥ सह्य = सज्झो । २० सय्हो ॥३।६६॥

१३७ उत्तमे तूत्तिम प्रोक्त मरिचे मिरिअ स्मृतम् ॥
दत्ते दिण्ण दत्त च कतमे कइमो भवेत् ॥६७॥
१३८ सप्तपर्णे छत्तिवण्णो छत्तवण्णोपि कीर्तितः ॥
मयटः प्रत्ययस्य स्यान्मइओ मउओपि च ॥६८॥ २५

मयेति ॥ [ विषमय = ] विसमइओ । विसमउओ ॥७८॥

१३९ सा साणश्च शुनो विष्वक् विसुं स्याच्च ॥
ध्वनेर्झुणी बन्द्रे वण्डोपि वुण्डो खण्डितशब्दे तु खण्डिओ खुडिओ ॥६९॥
१४० गवये गउओ गवयी गउआ अरण्यालाब्वोरादेरतो लुग्वा ॥ ३०
नमस्कारे नमोक्कारो परस्परे परोप्परं ॥७०॥

केति । [ श्वा = ] सा । साणो ॥३।६९॥

गवति गवयी । गउआ ॥

अरण्येति । अरण्य-अलाबू एतयोरादेरतो लुग्वा स्यात् । वालोपः । द्वित्वम् । रण्ण=अरण्यम् ॥ अलोपः । लाऊ । अलाऊ ॥ लाऊं । अलाऊं [=अलाबु.] ॥३।७०॥

५ अप्पेति । अर्पयतेर्धातोरोतौ वा स्तः । अप्पइ । ओप्पइ [अर्पयति] ॥ [अर्पितम्=]= अप्पिअ । ओप्पिअं ॥३।७०॥

१४१ अप्प-ओप्पआर्पयतेः स्वपेः सोव-सुवौ स्मृतौ ॥

१० पुनः शब्दे पुणाइ स्यात्पुणा पुणोपि च ॥७१॥

स्वपेरिति । [ स्वपिति = ] सोअइ । सुवइ ॥ [ स्वपितुम् = ] सोविउं । सुविउं ॥

पुनरिति । नञ्पूर्वस्यानादित्वात्पलोपे [ न पुनः = ] णउणाइ । णउणा । णउण । णाउणो ॥३।७१॥

१४२ वाव्ययेषु ह्रस्व आत्तः नित्यं त्वितरथान्यथा ॥

अमान्तरा विना माङि वृथा-मुधा-पुरादिषु ॥७२॥

१५ वा इति । [ यथा=] जह । जहा ॥ [ तथा =] तह । तहा ॥ [ अथवा = ] अहव । अहवा ॥ [ वा = ] व । वा ॥ [ हा = ] ह । हा ॥ [ न वा=] न व । [ नाना = ] नाण । नाणा ॥ [ सर्वथा = ] सव्वह । सव्वहा ॥

नित्यमिति । [ इतरथा = ] इअरह ॥ [ अन्यथा = ] अण्णह ॥ इत्यादि ॥३।७२॥

२० १४३ वोत्खाते चामरे तालवृन्ते नाराच-खादिरे ॥

कुमार-कालक-बलाका-पारावत-हालिके ॥७३॥

१४४ ब्राह्मणे स्थापिते पूर्वाह्णे हारिद्रे च मागधे ॥

वोत्खात इति । उत्खातादिषु आदेराकारस्य ह्रस्वो वा स्यात् । [उत्खातम्=] उक्खअ । उक्खाअ । [ चामर = ] चमरो । चामरो ॥ [ तालवृन्तम् = ] तल-

२५ वेण्ट । तालवेण्टं । तलवोण्ट । तालवोण्ट ॥ [ नाराच. = ] नराओ । नाराओ ॥ [खादिरम्=] खइरं । खाइर ॥ [कुमार ]= कुमरो । कुमारो ॥ [कुमारी=] कुमरी । कुमारी ॥ [ कालक = ]= कलओ । कालओ ॥ [ बलाका =] बलआ । बलाआ ॥ [ पारावत. ] परेवओ । पारेवओ ॥ [ हालिक = ] हलिओ । हालिओ ॥३।७३॥

[ब्राह्मण =] बम्हणो । बाम्हणो । विधिबलात्संयोगे ह्रस्वता न । [स्थापित =]

३० ठविओ । ठाविओ ॥ [ सस्थापित. = ] सठविओ । सठाविओ ॥ [ पूर्वाह्ण. ] पुव्वण्हो । पुव्वाण्हो ॥ [ हारिद्र = हलद्दो । हालद्दो ॥ [ मागध. = ] मगहो ।

आगहो ॥ [ बाहुः = ] बहू । बाहू ॥ [ दवाग्नि. = ] = दवग्गी । दावग्गी इति शब्दभेदादेव सिद्धम् ।

घञन्तस्यादुपान्त्यस्य वा स्याभाकस्य सामओ ॥७४॥

अदुपधस्य घञन्तस्यातो ह्रस्वो वा स्यात् ॥ [ प्रवाहः= ] पवहो । पवाहो ॥ [ प्रहारः=] पहरो । पहारो ॥ [ प्रकार = ] पआरो । पअरो ॥ व्यवस्थितत्वादेह । ५
पाकः=पाओ । त्यागः = चाओ । अदुपधस्य किम् । रागः = राओ । भाम. क्रोधे । भामो ॥३।७४॥

१४५ सदा-तदैकदा-सर्वदा-कूर्पास-निशाचरे ॥

सुप्राञ्जलप्रभृतिषु चात इत्वं विभाषया ॥७५॥

सदेति । [ सदा = ] सइ । सआ ॥ [ तदा = ] तइ । तआ ॥ [ एकदा ]= १०
एकइ । एकआ ॥ [ सर्वदा = ] सव्वइ । सव्वआ ॥ [ कूर्पास. = ] कुप्पिसो । कुप्पासो ॥ [ निशाचर = ] णिसिअरो । णिसाअरो ॥ [ सुप्राञ्जल = ] सुप्पिंजलो । सुप्पअलो ॥३।७५॥

१४६ स्यात्सास्नायां सुण्हा थुवओपि स्तावके प्रोक्तः ॥

उत्सिञ्चे च उच्छिंचः स्यादूसिचश्च विज्ञेयः ॥७६॥ १५

उत्सिञ्चेति । [उत्सिञ्चति =] उच्छिचइ । ऊसिचइ ॥ उत्क्षेपकः=उक्खेअओ । ऊखेअओ ॥३।७६॥

१४७ आसारे ऊसारोप्यज्जू श्वश्र्वास्तथार्य्यायाः ॥

पारेवओ स्यात्पारावओ पारावते स्मृतः ॥७७॥

आसारेति ॥ अपिशब्दात् आसारो इत्यपि ॥ अज्जू इति । आर्याशब्दस्य अज्जू २०
इति स्यात् श्वश्रूश्चेद् वाच्या ॥ [आर्या=] अज्जू । श्वश्रूवा किम् । अज्जा ॥३।७७॥

१४८ पङ्क्तथा अवल्यां भवेदोली संयोगे वा तु एदितः ॥

मेरा मिरायां किंसुअं केसुअ चापि किंसुके ॥७८॥

पथः पहोथ नीडे तु णेड्डं णीडं च नीडवत् ।

पङ्क्ताविति । पङ्क्तौ किम् । सख्याम् आली ॥ संयोग इति । संयोगे परे २५
इत एत्वं वा स्यात् ॥ पिण्डम् = पेण्ड । पिण्ड ॥ [ धम्मिलम् = ] धम्मिल्ल । धम्मेल्लं ॥ [ सिन्दूरम् = ] सिंदूर । सेंदूरं ॥ [ बिल्वम् = ] बिल्लं । बेल्लं ॥ नीडेति । [ नीडम् ] = णेड्डं । णीडं । नीडं ॥

मूषिके मूसओ ज्ञेयः प्रतिश्रुतिः पडंसुओ ॥७९॥

१५० इङ्गुदे अंगुअं वा स्यात् तित्तिरौ तित्तिरः स्मृतः ॥ ३०

कृत्रिमे कित्तिमो वापि मज्जौ नेरव्ययस्य गुः ॥८०॥

कृत्रिमेति। [ निमज्जति = ] णुमज्जइ ॥ [ निमग्न ] = णुमण्णो ॥ मज्जौ किम्। [ निपतति = ] निवडइ ॥३।८०॥

१५१ द्विधेत्यस्य दुहा दोहा कृञ्योगे केवलस्य च ॥
प्रवासिनि पवासू स्याज्जीर्णं जुण्णो क्वचित्तु न ॥८१॥

५ द्विधेति ॥ [ द्विधा क्रियते = ] दुहाकिज्जइ। दोहाकिज्जइ ॥ [द्विधाकृतम् =] दुहाइअ। दोहाइअ ॥ कृञ्योगे किम्। वलोप। [ द्विधागतम् = ] दिहागअं ॥

केवलेति। केवलस्य धातुनासयुक्तस्यापि द्विधाशब्दस्यैतौ स्तः। [ द्विधावेष-सुरवधूसार्थ = ] दुहावेसो सुरवहूसत्थो ॥

प्रवासीति। समृद्ध्यादित्वाद् दीर्घ ॥ [ प्रवासी = ] पवासू ॥ जीर्णेति।

१० क्वचित्तु न। [ जीर्णे भोजनमात्रे = ] जिण्णे भोअणमत्ते ॥२।८१॥

१५२ हीने हूणोपि हीणोपि विहीनेप्येवमीरितम् ॥

विहीति। [ विहीन = ] विहूणो। विहीणो ॥ वेरेवोपसर्गान्नान्यस्मादिति नियमार्थमिदम् ॥ तेनेह न। [ प्रहीणपरिजना = ] पहीणपरिअणा ॥

ईत इद्वा तु पानीयोपनीतालीकजीवतौ ॥३।८२॥

१५ १५३ प्रदीपित-करीषेषु तूष्णीके च निरीक्षिते ॥
अवसीदत्प्रसीदद्व्रीडितेष्वपि शिरीषके ॥८३॥

ईत इति। [ पानीयम् = ] पाणिअ। [ उपनीतम् = ] उवणिअ ॥ [ अलीकम् = ] अलिअ ॥ [ जीवति = ] जिअइ ॥ [ जीवतु = ] जिअउ ॥ जीवतौ इति तन्त्रेण तिप्तुबन्त्योरनुकरणम्। पक्षे पाणीअ। उवणीअ। अलीअ।

२० जीअइ। करीसो। अत्र व्यवस्थितत्वादेषु विकल्पोन्येषु तु नित्यम् ॥३।८२॥

१५४ द्वितीये च तृतीये च तदानीमि गृहीतके ॥
निलीयानीत-वल्मीक-गभीर-ह्रीतपूर्वके ॥८४॥

१५५ कुतूहले कोउहल्ल कोऊहल्ल कुऊहलं ॥
कोहल कउहल्ल च कोडुं चेति विनिर्दिशेत् ॥८५॥

२५ १५६ कीदृशेदृश-पीयूषेष्वीत एद्वा तु पीठके ॥

कुतूहलेति। स्पष्टम् ॥

कीदृशेति। एषामीकारस्य एत्वं स्यात् ॥ [ कीदृश = ] केरिसो ॥ [ ईदृश = ] एरिसो ॥ [ पीयूष = ] पेऊसो ॥

वेति। स्वार्थे क ॥ [ पीठम् = ] पेढ। पीढ ॥८६॥

३० गुडूच्यां तु गलोई स्याद् गुर्व्यां तु गरुई भवेत् ॥८६॥

१५७ आदेरुदोत्वं मुकुले मुकुरे मुकुटे गुरौ।

आदेरिति । मउलो । मउरो [ = मुकुलः । मुकुर. । ] इत्यादि ॥

चुलुके मुकुलौ "१" चापि गुरोः कप्रत्यये तु वा ॥

१५८ उपरेरवरिमुवरिमुद्व्यूढे उव्वीढमुव्वूढम् ॥

भिउडी स्मृता भ्रुकुट्यां भ्रुवि भुमया चापि भमया च ॥८८॥

गुरोरिति । [ गुरुरेष पाषाण =] गरु एसो पासाणो । गुरोर्गुण एवेष्यते ५
गुणादन्यत्र तु [ अस्माक गुरुजनवक्र = ] अम्हाण गुरूजणवक्को ॥३।८७॥

गुरोरिति । स्वार्थे कप्रत्यये परे गुरोरुत अत्व वा स्यात् । [ गुरुकः ] =
गरुओ । गुरुओ ॥

उपेति । [ उपरि = ] अवरि । उवरि ॥

१५९ स्यात्पौरुषे पउरिस पुरुषे पुरिसोपि च ॥ १०

छीअं क्षुतेथ मुसले मूसल मुसलं द्वयम् ॥८९॥

१६० दुकूले दुअल्लं दुऊल्ल दुगुल्ल

पशौ सिंहशब्दस्य सीहोपि सिघो ।

अपि स्तेनशब्दे स्मृतौ थेण-थूणौ

सइण्णं च सेण्ण च सिण्णं च सैन्ये ॥९०॥ १५

दुकूलेति । दुगुल्लमित्यार्षे ।

पशाविति । पशौ किम् । [ सिहदत्त सिहराज = ] सिंघदत्तो सिंघराओ ॥

अपीति । [ स्तेन = ] थेण । थूण ॥३।९०॥

१६१ सैन्धवे सिन्धवं विद्यात् शनैश्चरे सणिच्छरो ॥

देवरे दिअरोपि स्यात् केसरं किसर द्वयम् ॥९१॥ २०

अपिशब्दात् देअरो ॥३। १॥

१६२ हनूमति हनूमन्तो वातुले वाउलो भवेत् ॥

महूअ महुअ वापि मधूके सप्रकीर्तितम् ॥९२॥

१६३ नूपुरे नूउर प्रोक्त णेउरं निउरं त्रयम् ॥

ताम्बूले स्यात्तु तंबोलं तावूल तंवुल तथा ॥९३॥ २५

१६४ पुंश्चल्यां छिछई प्रोक्ता कर्पूरे कोप्परं भवेत् ॥

स्थूणा थूणा च थोणी च तूणे तोणं च तूणवत् ॥९४॥

१६५ मूल्ये तु मोल्लं मुल्लं कण्डूये कडुअः स्मृतः ॥

ऋतोत्स्यात् रिः केवलस्य वृषभे वसहोसहौ ॥९५॥

ऋत इति । ऋकारस्यात्स्यात् ॥ घृतम्=घअ ॥ तृणम्=तणं ॥ कृतम्=कअं ॥ ३०

रि इति ॥ व्यञ्जनाद्ययुक्तस्य ऋतो रिः स्यात् । ऋद्धि =रिद्धी ॥ ऋक्ष =रिच्छो ॥

वृषेति ॥ [ वृषभः = ] वसहो । उसहो ॥२।९५॥

१६६ रिसहोसहौ त्वृषभे ऋणे रिणमणौ तथा ।
ऋजौ रिजू च उजू च ऋतोरपि रिऊ उऊ ॥९६॥

रिसेति । ऋषभ शब्दे तु एतौ स्तः । रिसहो । उसहो । ऋणे इति । ऋणम् = अणा ॥

[ ऋतौ इति ॥ शौरसेन्यां तु रिदू उदू ॥२।९६॥

१६७ वेअरणा विअरणापि स्यात् ऋषेरपि रिसी इसी ॥
निवृत्तवृन्दारकयोरुत्वमत्वं भवेदृतः ॥९७॥

निवृत्तेति । [ निवृत्तम् = ] णिवुत्तं । णिअत्त [ वृन्दारकः = ] वुंदाराओ । वंदारओ ॥२।९७॥

१६८ मृगाङ्क-मृत्यु-शृङ्गेषु मसृणे च ऋतोदितौ ।
मृदुकस्य तु माउक्कं मउअं प्रकीर्तितम् ॥९८॥

१६९ मृदुत्वस्य भवेन्माउत्तणं चापि मउत्तणं ।
कृशायां किसा कासा दृप्ते तु दरिओ मतः ॥९९॥

मृगाङ्केति । एषामृकारस्य अत्वमित्वं च स्यात् । गलोप । संयोगे ह्रस्वता । [ मृगाङ्क = ] मअंको । मिअंको ॥ त्यस्य च. । [ मृत्यु = ] मच्चू । मिच्चू ॥ [ शृङ्गम् = ] सग । सिग ॥ [ मसृणम् = ] मसिणं । मसणं ॥ दृप्त इति ॥ [ दृप्तसिंहेण = ] दरिसिंहेन ॥२।९९॥

१७० क्लृप्ते किलित्तं क्रान्ते च किलत्तं आदृते दढिः ॥
कृकिन्क्सान्तस्य तु दृशोर्दशब्दस्य रिरिष्यते ॥१००॥

१७१ वृष्टौ विट्ठी च वुट्ठी च वृष्टे विट्ठं च वुट्ठवत् ॥
नप्तृके णत्तिओपि स्यात् णत्तुओपि प्रकीर्तितः ॥१०१॥

क्लृप्त इति । [ क्लृप्तकुसुमोपहारेषु = ] किलित्तकुसुमोवहारेसु ॥ क्रान्त इति । [ धाराक्रान्त = ] धाराकिलत्तवत्तं ॥

आदृत इति । आदृतशब्दे द इत्यस्य ढि स्यात् । आढिओ ॥

कर्क्वीति । सदृश = सरिसो ॥ सदृक् = सरि ॥ [ सदृग्देवानाम् = ] सरिदेवाण ॥ [ सदृग्रूप. = ] सरिरूपो ॥ सदृक्ष = सरिसो ॥ [ तादृक्ष = ] तारिस. ॥ [ यादृक्ष. = ] जारिसो ॥ [ ईदृक्ष. = ] एरिसो ॥ [ कीदृक्ष. = ] केरिसो ॥ [ अन्यादृक्ष. = ] अण्णारिसो ॥ [अस्मादृक्ष =] अम्हारिसो ॥२।१०१॥

१७२ ऋतः पूर्वपदान्ते उत् इत्त्वमुत्त्वं च मातरि ।
प्राकृते पअअं पाअअं स्यात्पउअ-पाउओ ॥१०२॥

ऋतः इति ॥ [ पितृगृहम् = ] ॥ पिउहरं ॥ [ पितृवनम् = ] पिउवणं ॥ [ जामातृगृहम् = ] जामाउहरं ॥

ह्रस्वमिति ॥ [मातृगृहम्=] माइहरं । माउहरं ॥ [मातृमण्डलम् । माउमंडलं ॥

प्राकृतेति । प्राकृतशब्दस्यैते चत्वारः स्युः ॥ पअअं । पाअअं । पउअं । पाउअं ॥२।१०२॥ ५

१७३ इत्स्यात् कृपा-हृदय-वृद्धि-वृषी-वितृष्ण-
दृष्टेषु दृष्टि-नृप-तृप्त-सकृच्छृगाले ॥
कृत्या-कृशानु-कृशरासु समृद्धि-ऋद्धि-
कृच्छ्रातिकृच्छ्रकृषिते कुसृतौ कृशे च ॥१०३॥

१७४ कृत्याकृति-प्रकृति-कृत्यकृपीट-वृष्टि- १०
कृष्टेषु कृत्रिम-कृपे-कृपणे-कृपाणे ॥
हृत्-कृत्तिका सकृकलास-वृथा-नृसिंह-
भृङ्गार-निष्कृति-नृशंस-विसृत्वरेषु ॥१०४॥

१७५ शृङ्गार-सृष्टि-हृत-दृष्टिकृषौ समृद्धे
स्यात्कृत्तिवास-भृगु-भृङ्ग-विशृत्वरेषु । १५
संव्याहृते-तृषित-वृत्ति वृके-निकृष्टे
वृष्ये वृषे च मृगया पृथुले पृथौ च ॥१०५॥

[ कृपा = ] किवा ॥ [ हृदयम् = ] हिअअं ॥ [ वृद्धि = ] = विड्ढी ॥ [ वृषी = ] विसी ॥ [ वितृष्ण = ] विइण्हो ॥ [ कृच्छ्रम् = ] किच्छं ॥ [ तृप्तम् = ] तिप्प ॥ नृप = निवो ॥३।१०५॥ २०

१७६ वृत्तेपि केचन जगुर्धृतिभृत्य-भृत्या-
वृत्तेषु बृंहित-युतेषु यदृच्छया च ॥
भृति-प्रवृत्ति-प्रभृति-निभृत-प्रावृते च ॥
धृतान्ते संवृते चैव विवृते निवृते तथा ॥१०६॥

१७७ मृष्टे मट्टं रसो मिट्ठं पिच्छी पुच्छी च पृथ्विका २५
उत्त्वम् ऋतु-परामृष्ट-प्रवृष्ट-स्पृष्ट-प्रावृषि ॥१०७॥

१७८ निवृत्तौ निवृत्ते वृन्दे वृन्दारक-मृणालयोः ।
जैवातृके परभृते संभृते प्राभृते तथा ॥१०८॥

पिच्छीति । पृथ्वीशब्दे एतौ स्त ॥

उत्त्वमिति । [ ऋतुः = ] उऊ ॥ [ परामृष्टः = ] परामुट्ठो ॥ [ प्रवृत्तः = ] ३० पउत्तो ॥ [ प्रावृषः = ] पाउसो ॥ [ भृतिः = ] भुई ॥ इत्यादि ॥३।१०८॥

१७९ वृतौ मृतौ मृते मृष्ये मातृकायां च मातृके ॥
जामातृके भ्रातृके च पितृकादिषु चेष्यते ॥१०९॥
१८० ऐत एत् औत ओदुच्चैर्नीचैसोष्टेरअः स्मृतः ।
अइर्दैत्यैश्वर्य-दैन्य-स्वैर-भैरव-सैनिके ॥११०॥
५ १८१ वैदर्भे चैव वैशाखे वैदेशे वैणिके तथा ।
वैडूर्ये वैभवे वैवे वैणे वैदे च वैपुले ॥१११॥
१८२ नैसर्गिके नैकृतिके स्वैरिणी-शैत्यवैकृते ॥
वैकर्तने च दैवज्ञे ऐकारस्य भवेदइः ॥११२॥
ऐत एत इति ॥ [ शैलः = ] सेलो ॥ [ कैलास. = ] केलास. [ वैद्य = ]
१० वेज्जो ॥
औत ओत् ॥ [यौवनम्=] जोव्वण ॥ [कौमुदी=] कोमुई ॥ [ कौस्तुभ = ]
कोत्थुहो ॥
उच्चैरिति । अनयोष्टेरअ इत्यादेशः स्यात् ॥ उच्चअ ॥ नीचअं ॥
उच्चक-नीचक-शब्दाभ्या सिद्धेपि उच्चैर्नीचसो रूपान्तरनिवृत्त्यर्थं वचनम् ॥
१५ अइरिति ॥ एषामैकारस्य अइ' स्यात् ॥ [ दैत्य'=] दइच्चो ॥ [ऐश्वर्यम् = ]
अइसरिअ ॥ [दैन्यम् = ] दइण्ण ॥ [स्वैरम् = ] सइरं ॥ [भैरवम् =] भइरव ॥
[ सैनिक = ] सइणिओ ॥ इत्यादि ॥
१८३ वैरे तथा कैरव-कैतवे वैशम्पायने वैश्रवणे च दैवे ।
कैलास-वैकौशिक-दैवतेषु वैदेहवैतालिक-वैशिकेषु ॥११३॥
२० १८४ वैकुण्ठ-वैश्वानर-वैजनन्य-वैशाल-वैकर्तन-गैरिकेषु ॥
वैतानिके शैशव-कैटभे च शैलेयमैरेय-सहैव जैने ॥११४॥
१८५ जैवातृके वैजवने च वैश्ये सनैषधे वैजनने च चैत्रे ।
त्रैलोक्य-वैज्ञानिक-वैजयन्ती वैधव्यमुख्येषु अइर्विभाषा ॥११५॥
वैर इति ॥ पक्षे एत्वम् । [ वैरम् =] वेरं । वइर इत्यादि ॥२।११५॥
२५ १८६ अण्णोण्णमण्णमण्णुण्णं चान्योन्यपोन्यदे भवेत् ।
प्रकोष्ठे स्यात्पवट्ठोपि पउट्ठोपि प्रकीर्तितः ॥११६॥
१८७ आतोद्ये स्यादावज्जं आउज्जं च निगद्यते ।
मनोहरे मणहरं मणोहरमिति द्वयम् ॥११७॥
१८८ सरोरुहे सररुहमपरं च सरोरुहं ।
३० अपि भवति शिरोविअणा सिरविअणा च द्वय तुल्यम् ॥११८॥
अपीति । शिरोवेदनाशब्द इति शेष ॥३।११८॥

१८९ सोच्छ्वासे सूसासो गोर्गउ-गावश्च निर्दिष्टः ॥
सौराष्ट्र-मौञ्जायनशौण्ड दौवारिकाश्च सौगन्धिक-सौमनस्ये ॥११९॥
१९० सौगन्ध्य सौवर्णिकशौण्डिकाः पौलोमी च शौद्धोदनिरेषु औदुत् ॥१२०॥
गोरिति । गउओ एसो । गउआ एसा । गावो हरस्स । एसा गाई ॥ स्त्रिया-मीप् ॥३।११९॥ ५
सौराष्ट्रेति ॥ एषामौकार उत्स्यात् ॥ सर्वत्र इति रलोपः । ष्ट्स्य ठः । द्वित्वम् । सयोगे ह्रस्वता ॥ [ सौराष्ट्र = ] सुरट्ठो ॥ [ मौञ्जायन = ] मुंजाअणो ॥ [ शौण्डः = ] सुण्डो ॥ [ दौवारिकः = ] दुवारिओ इत्यादि ॥३।१२०॥
१९१ कौक्षेयके भवेत्कुच्छेअअं कोच्छेअअं तथा ।
कउच्छेअअमित्येवं त्रयं नावा तु नौ पदे ॥१२१॥ १०
नौपदेति ॥ [ नौ एषा = ] नावा एसा ॥ [ नावा गच्छति = ] नावाए गच्छइ ॥३।१२१॥
१९२ पौरकौरवमौनेषु सौध-पौरव-रौरवे ।
गौडकौशलकौले वा सौरे मौलौ च औ अउः ॥१२२॥
पौरिति ॥ एषामौकारस्य अउरित्यादेशः । [ पौर = ] पउरो । पोरो ॥ १५
[ कौरवः = ] कउरवो । कोरवो ॥ [ मौलि = ] मउली । मोली ॥३।१२२॥
१९३ गौरवे गारव विद्यात्तथा गउरवं विदुः ॥
वेइल्ल विअइल्ल च द्वयं विचकिले भवेत् ॥१२३॥
१९४ अयस्कारे च एक्कारो केल कअल समम् ।
पूतरे पोर इत्युक्तः वोरं तु बदरे स्मृतम् ॥१२४॥ २०
पूत इति । पोरो दधिकीटकः ॥ वोरमिति ॥ [बदरम् =] वोर । [बदरिका= ] बोरी ॥३।१२४॥
१९५ नवमालिका तु णोमालिआ मता पोप्फल तु पूगफले ॥
णोहलिआ नवफलिकायां च निषण्णे णुमण्णोपि ॥१२५॥
पोप्फलं । पोप्फली ॥ २५
निषण्ण इति ॥ अपि शब्दात् निसण्णो इत्यपि ॥३।१२५॥
१९६ लवणे लोणं लअणं मऊह मोहौ मयूखेपि ॥
सुकुमारे सोमालं सुउमालं मउर-मोरौ च ॥१२६॥
मउरेति । मयूरशब्दे एतौ स्त ॥ मउरो । मोरः ॥३।१२६॥
१९७ चतुर्द्वारे वा चोव्वारो चोग्गुणोपि चतुर्गुणे ॥ ३०
चउत्थ-चोत्थौ चतुर्थे उक्खलं वा उदूखले ॥१२७॥

चतुरिति ॥ [ चतुर्द्वारः = चोव्वारो । ] पक्षे चउव्वारो ॥ [ चतुर्गुणः = चोग्गुणो । ] चउग्गुणो ॥

उदूखलेति ॥ [ उदूखलकम् = ] उक्खलं ]। पक्षे उऊहलं ॥ उलूखलस्य तु उलूहलं ॥१।१२७॥

५ १९९ वावापोतस्य सर्वस्यौत् ऊदोत्वोपस्य वा गतेः ॥
नापमृत्यावपस्मारे नापस्मृत्यपि शब्दयोः ॥
नैवापराजितायां नोपपत्यपगतादिषु ॥१२८॥

वावा इति । अव-अप-उत इत्येतेषामव्ययानां सर्वस्य स्थाने औत्वं वा स्यात् ॥ अवतरति = ओअरइ । अवअरइ ॥ अपसरति = ओसरइ । अवसरइ ॥
१० उद्गच्छति=ओगच्छइ उअगच्छइ ॥

ऊदो इति । गतिसंज्ञस्योपस्य एतौ वा स्तः ॥ [ उपहसितः = ] ऊहसिओ । ओसिओ । उवहसिओ ॥ [अपसादः = ] ओसाओ । अवसाओ ॥

गतेः किम् । उपकुभ । क्रियायोग एव गतिसञ्ज्ञोक्ता ॥

नापेति ॥ [अपमृत्युः = ] अवमिच्चू । इमश्मश्रु पक्ष्मणश्च म्हः इति म्हः ॥
१५ [ अपस्मार = ] अवम्हारो ॥ [ अपस्मृति. = ] अवम्हई ॥ अपशब्द = ] अवसद्दो ॥ [ अपराजित = ] अवराजिओ ॥ उपपति = उववई ॥ [ अपगतम् = ] अवगअ ॥१।१२८॥

१९९ त्रस्तस्य हित्थ-तट्ठौ तत्थः क्षिप्तस्य छूढमपि खित्तं ॥
एत्ताहे च इआणि एण्हिं च स्यादिदानीमि ॥१२९॥
२० २०० कर्णिकारे कण्णिआरो कणिआरो भवेत्तथा ।
कण्णेरोपि कणेरोपि कणीरोपि निपात्यते ॥१३०॥
२०१ धृष्टद्युम्ने भवेद् धिट्ठज्जुणो द्वित्वं तु णस्य न ।
तद्धितस्याथ केरः स्यादिदमर्थे कृतस्य तु ॥१३१॥

त्रस्तेति ॥ [ त्रस्तम् = ] हित्थं । तट्ठं । तत्थं ॥
२५ कर्णीति ॥ अस्य कणेरादेशो वा । णस्य च पक्षद्वयेपि द्वित्व निपात्यते ॥

धृष्टेति । म्नस्य णादेशो निपात्यते ॥ तस्य च शेषादादेशयोः इति प्राप्तं द्वित्व निषिध्यते ॥ निपातनस्यैवाय प्रपञ्च. ॥

तद्धितेति ॥ तस्येदम् इत्यर्थे कृतस्य तद्धितप्रत्ययस्य केरः स्यात् । युष्मदीय. = तुम्हकेरो । अस्मदीय· = अम्हकेरो ॥१।१३१॥
३० २०२ मदीये पाणिनीये च केरादेशो नहीष्यते ॥
तुम्हेच्चयं तु यौष्माके अस्माके म्हेच्चयं विदुः ॥१३२॥

२०३ परकीये पारक्कं पारिक्कं पारकेरं च।
राअक्कं राइक्कं कीयान्ते राअकेरं च ॥१३३॥

मदीयेति ॥ [ मदीयम् = ] मईअं ॥ [ पाणिनीयम् = ] पाणिनीअं ॥
तुम्हे इति ॥ यौष्माकम् = तुम्हेच्चअं । अस्माकम् = अम्हेच्चअं ॥
राअक्कं इति । राजकीयशब्दे एते त्रयः स्युः ॥३।१३३॥ ५

२०४ वतेर्द्विरुक्तो वः सव्वङ्गीणे सव्वंगिश्रो भवेत् ॥
पान्थे तु पहिश्रो नित्यं आत्मीयेऽप्पणश्रो भवेत् ॥१३४॥

वतेरिति । तेन तुल्ये वतिर्विहितस्य द्विरुक्तो व. स्यात् ॥ वाराणसीवन्मथुरा = वाणारसिव्व महुरा ॥ मथुरावत् पाटलिपुत्रे प्राकार. = महुरव्व पाडलिउत्ते पाआरो ॥ १०

सर्वेति ॥ [ सर्वाङ्गीण = ] सव्वगिओ ॥
पान्थ इति ॥ पथिकशब्दस्य पहिओ सिद्धत्येव । पान्थशब्दस्य रूपान्तर-निवृत्त्यर्थं वचनम् । अतएव नित्यग्रहणम् ॥३।१३४॥

२०५ तीयस्य इज्जं वा त्वस्य डिमात्तण इत्यमी।
डेल्लस्तैलस्य नाङ्कोटात् दोत्तो तस्प्रत्ययस्य वा ॥१३५॥ १५

तीयेति । द्वितीयम् = बिइज्ज । [ तृतीयम् = ] तिइज्ज ॥
त्वस्येति । पीनत्वम् = पीणिमा । पीणत्त । पीणत्तणं ॥ पीनता इत्यस्य तु त-लोपे पीणआ । मागध्यां तु पीणता ।
डेल्ल इति । अङ्कोटं हित्वा अन्यस्मात् पदात् परस्य तैलशब्दस्य कृतद्‌व्या-कृतस्य वडिल्ल इत्यादेशः स्यात् । स्नेहे तैल च । तिलानां स्नेह. तिलतैलम् । २०
तिलेल्ल । कडेल्लं । डित्वाट्टिलुप् ।। अङ्कोटात्तु अकोल्लतेल्ल ॥
दोत्तो इति । सर्वत. = सव्वदो । सव्वत्तो ॥ [ एकतः ] = एगदो । एकत्तो ॥
[ अन्यतः = ] अण्णदो । अण्णत्तो ॥ पक्षे सव्वओ इत्यादि ॥३।१३५॥

२०६ कृत्वोभिमुखयोर्हुत्तं निपातं मेनिरे परे ॥
मतोः स्थाने इल्ल उल्लः आल आलु इरो मणः ॥१३६॥ २५

२०७ वन्तो मा मन्त इत्तश्च यथालक्ष्यं दश स्मृताः ॥

कृत्वो इति । क्रियाभ्यावृत्तौ विहितस्य कृत्वसुच प्रत्ययस्य अभिमुखशब्दस्य च हुत्तमित्यादेश स्यात् । दशकृत्वः = दशहुत्तं ॥ शतकृत्व. = सअहुत्तं ॥ प्रियस्या-भिमुखम् = पिअहुत्तं ॥
निपातेति । आभिमुख्यार्थे हुत्तमिति निपात एवायमस्ति नादेश इति केचित् ॥ ३०
मतोरिति ॥ शोभावान् = सोहिल्लो । जाम्बवान् = जामइल्लो ॥ विकारवान् =

विआलुल्लो ॥ [ मांसवान ] = मंसुल्लो ॥ [ दर्पवान् = ] दप्पुल्लो ॥ श्रद्धावान् = सद्धुल्लो । ज्योत्स्नावान् = जोण्हालो ॥ [ जटावान् = ] जडालो ॥ [रसवान् = ] रसालो ॥ स्नेहवान् = णेहालू ॥ [ दयावान् = ] दयालू ॥ [ ईर्ष्यावान् = ] इस्सालू ॥ [लज्जावान् =] लज्जालू ॥ गर्ववान् = गव्विरो ॥ रोषवान् = रोहिरो ॥
५ धनवान् = धणमणो ॥ [ पुत्रवान् ] = पुत्तमणो ॥ भक्तिमान् = भत्तिवन्तो ॥ [ धनवान् = ] धणवन्तो ॥ हनूमान् = हणूमा । हणूमन्तो ॥ पुण्यवान् = पुण्णमन्तो । मानवान् = माणइत्तो । [ काव्यवान् = ] कव्वइत्तो ॥

मत्तो किम् । [ धनी = ] धणी । [ आर्थिकः = ] अत्थिओ ॥
यावतो जेत्तिअं जित्तिअं जित्तिलं च जेद्दहं ॥१३७॥
१० २०८ तावतस्तेत्तिअं तित्तिअं तित्तिलं च तेद्दहं ।
एतावत्येत्तिअं इत्तिअं इत्तिलमेद्दहं ॥१३८॥
२०९ कियतः केत्तियं प्रोक्तं कित्तिलं केद्दहं त्रयम् ॥
इदमस्त्वियतोपि स्यादेत्तिअ-एत्तिल-एद्दहाः ॥१३९॥

इदम इति । इदम् शब्द-प्रकृतिकस्य इयच्छब्दस्य एत्तिअ एत्तिलं एद्दहं इति
१५ त्रय स्यात् ॥१।१३९॥

२१० त्रप्रत्ययस्य ह-त्थो-हिः वैकाद्दः सिंस-सिअं-सिआ ।
डिल्ल-डुल्लौ तत्र भवे आलु आलाविति स्मृतौ ॥१४०॥

त्रलिति । हत्थहि इति त्रय आदेशाः ॥ यत्र = जह । जत्थ । जहि ॥ तत्र=तह । तत्थ । तहि ॥ अन्यत्र = अण्णह । अण्णत्थ । अण्णहि ॥
२० वैका इति । एकशब्दात्परस्य दाप्रत्ययस्य एते त्रय स्यु. । एकदा=एकसिंस । एकइआ । पक्षे एगइआ ॥

डिल्लेति । तत्रभव इत्यर्थे एतौ स्त ॥ ग्रामे भव = गामिल्लो । गामिल्लिआ ॥ [पुरि भवम् =] पुरिल्लं ॥ [ अधोभवम् = ] हेट्ठिलं ॥ [उपरिभवम्=] उवरिल्लं ॥ [ आत्मनि भवम् = ] अप्पुल्लं ॥
२५ आल्विति ॥ [ ग्रामे भव. = ] गामालू । गामालो ॥१।१४०॥

२११ स्वार्थेप्येते स्मृताः कश्च नवैकाल्लोपि वा स्मृतः ॥
डिअं शनैः सः मनाको मणिअं मणअं मणा ॥१३८॥
२१२ मिश्रेर्मीसालिअं मीसं दीर्घेस्तु दीह-दीहरौ ॥
अन्धे त्वन्धो अंधलोपि पत्रे पत्तं च पत्तलं ॥१३९॥

३० स्वार्थे इति ॥ निर्जिताशोकपल्लवेन = निज्जिआसोअपल्लविल्लेण ॥ मउत्तणइल्लं = मृदुत्वम् ॥ पुरिल्लं । पुरा । पुरो व ॥ मह पिउल्लओ = मम

प्रिय: । हत्थुल्लो=हस्तः । वासी =वासुल्लो ।। बोदा = बोद्दाल्ल् । बोद्दाल्लो ।।

कः । [ चन्द्र. = ] चन्दओ । [ गगनम् = ] गअणअं ।। [ गिरि = ] गिरिओ । [वधूम् =] वहुअ ।। आलेट्ठुअं = आलेष्टुम् ।। प्राहुककात् बिन्दुलोप । आलेट्ठं । आलेष्टुअं = आश्लिष्टम् ।

कान्ताद् द्वितीयोपि को भवति ।। [ वधूम् = ] बहूअअं ।। पक्षे चंदो । गिरी । आलेट्ठु ।। ५

कुत्सादौ क. संस्कृतवदेव सिद्धः ।। स्वार्थिकस्तु को यावदादिभ्यः एव विहित इति क-वचनम् ।

नवेति ।। नव एक आभ्यां स्वार्थे द्विरुक्तो ल्लोपि वा स्यात् ।। [ नवः = ] नवल्लो ।। [ एक = ] एकल्लो ।। पक्षे नवो । एक्को । एओ ।। १०

उपरे सध्याने अवरिल्लम् इति तु स्वार्थे विहितेन डिल्लेनैव सिद्धम् ।।

डिअमिति ।। शनैस्-शब्दस्य स्वार्थे डिअं-प्रत्ययः स्यात् । डित्वाट्टिलोपः ।। [ शनै. जल्प = ] शणिअं जप्प ।।

मना इति । एते त्रय आदिश्यन्ते ।।३।१४१।।

दीर्घेति । [दीर्घम्.=] दीह । दीहरं ।।३।१४२।। १५

२१३ गोर्गो णः स्यात् स्त्रियां गोणी गोणा गावी च गाई च ।।
वलीवर्दः वइल्लः स्यादप्सु आऊ इति स्मृतम् ।।१४२।।

गोरिति । [गौ. =] गोणो ।। स्त्रियामिति ।। [ गौ = ] गाई । गाव. गावीओ गाईओ ।। गोणी । गोणा ।। वली इति ।। [ वलीवर्द = ] वइल्लो ।।

[ विज्ञानगुणमहार्घ्ये पुरुषे दासत्वमपि रमणीयम् । २०
अबुद्धवलीवर्दानां गृहे मा स्वामिनी भूयात् = ]

विण्णाणगुणमहग्घे पुरिसे दासत्तणमपि रमणिज्जं ।
अबुद्धवइल्लाणँ घरे मरघमा सामिणी होआ ।।३।१४३।।

२१४ व्युत्सर्जने वोसिरणँ व्युत्सर्गे विउसग्गवाक् ।
क्वचित्कत्थइ अपस्मार अवम्हारोपि वम्हलो ।।१४१।। २५

व्युत्सर्ग इति ।। विउसग्गो ।।

क्वचित्-शब्दे कत्थइ इति प्रयोज्यम् ।।३।१४४।।

२१५ उद्वहतावुव्वहइ भवेन्मुव्वहईति च ।।
निलेहणं स्यान्निलये चच्चिक्कं स्थासके स्मृतम् ।।१४५।।

उद्वहेति ।। [उद्वहत गृहिणीम् = ] उव्वहइ घरणिं ।। भवेदिति । मुव्वहइ ।। अन्यत् विशदम् ।।३।१४१।। ३०

२१६ महान्महंतोथ भवान् भवंतो जन्म जम्मणं ॥
मघवा तु मघोणः स्यात्साक्षिणि स्यात्तु सक्खिणः ॥१४६॥
मघवेति । मघवा । मघोणो ॥
साक्षीति । सक्खिणो ॥३।१४६॥

५ २१७ आशिषि स्यात्तु आसीसा क्षुल्लके खुड्डओ भवेत् ।
प्रतिस्पर्द्धाया पाडिसिद्धी पडिसिद्धी च कीर्त्यते ॥१४७॥
२१८ बृहत्तरे वड्डअरं बृहन्वड्डो वडोपि च ।
गायने घायणोपि स्यात् ककुदे ककुधं तथा ॥१४८॥
२१९ स्याद्काण्डे तु अत्थक्कं कार्पासे फलही मता ॥
१० समर्थे पक्कलो ज्ञेयः शाखायां साहुली स्मृता ॥१४९॥
२२० पण्डिते पण्डिअो गोलच्छोपि विष्णौ तु भट्टिअो ।
लज्जावत्यां भवेल्लज्जालुइणी उज्जल हठे ॥१५०॥
२२१ खेले खेड्डं श्मशाने मसाणं करसीति च ॥
तिंगिच्छं कुदिनं अल्लं पौष्पे रेणौ स्मृत त्रयम् ॥१५१॥
१५ २२२ गोदवर्यां भवेद्गोला शेषमूह्य प्रयोगतः ।
वीप्साया प्राक्पदान्तस्य स्यादेर्मो वा परे स्वरे ॥१५२॥

शेषमिति । अत्रानुक्तलक्षणं लोपागमविकारादिप्रयोगदर्शनाद्वा उह्यीय बहुल-ग्रहणात्समाधेयम् । वीप्सायामिति । एकमेक्क । एक्कमेक्केण । अङ्गे अङ्गे=अग-मंगम्मि ॥ पक्षे एक्केक्क । अगंअंगम्मि इत्यादि ॥३।१५२॥

२० [ इति विविधादेशात्मक तृतीयः प्रकाश ॥ ]

—·०—

चतुर्थः प्रकाशः

# अव्ययानि

इत. ऊर्ध्वं वक्ष्यमाणानि अव्ययानि ॥

२०३ उअ पश्यार्थे तं वाक्योपक्रमे स्मृतम् ।
आम स्यादभ्युपगमे वैपरीत्ये णवि स्मृतम् ॥४।१॥

उएति ॥

उअ णिच्चलणिप्फंदा = [ पश्य निश्चलनिस्पन्दा । 5

तमिति ॥ [ अथ त्रिदशबन्दिमोक्षम् = ] त तिअसवधमोक्ख ॥

आमेति । आम वहला वणाली = बहला वनाली ॥

वैपरीति ॥ णवि हा वणे ॥४।१॥

२२४ हंदि-हंद गृहाणार्थे जेण तेण च लक्षणे ॥
हंदि खेदे विकल्पे पश्चात्तापे निश्चये ऋते ॥४।२॥ १०

हदीति । हद पलोएसु इमं = प्रलोकय इमम् ॥ हंदि तम्बोल । [ ताम्बूल ] गृहाण इत्यर्थं ॥ ममरुअ जेण कमलवण = [भ्रमररुतेन कमलवनम् ] ॥४।२॥

हदि चलणे णओ सो न माणिओ हंदि हुज्ज एत्ताहे ॥
हंदि न होहि भणिरी सा सिज्जइ हदि तुह कज्जे ॥

हदीति । हंदि भणदि । सत्यम् [ भणति ] इत्यर्थः ॥४।२॥ १५

२२५ इवेत्यर्थे मिव पिव विव व्व विय वेव च ।
णइ-चेअ-चिअ-चाः स्युर्द्विचाप्यधारणे ॥४।३॥

इवेति ॥ [ कुमुदमिव = ] कुमुअ मिव । [ चन्दनमिव = ] चदणं पिव ॥ [ हस इव = ] हंसो विव ॥ सागर इव = ] साअरोव्व ॥ [ कमलमिव = ] कमलं विय ] । [ चन्द इव सूर्य इव = ] चंदोव सुज्जो इव ॥ शेषस्येव विनि- २० र्मोक' = सेसस्स व णिम्मोओ ॥ [ नीलोत्पलमाला इव = ] णीलुप्पलमाला इव ॥

णइ इति । चत्वार एते अवधारणे प्रयोज्या । अन्त्यास्तु त्रयो द्विर्भूल-चकारा । अपि शब्दादेकचकारा अपि प्रयुज्यन्त ॥ गईए णइ ॥ [ यदि अदर्शनं सदैव मरणम् = ] जं चेअ अदंसणं त चेअ मरणं ॥ [ अन्धकार इव लोचनानां सत्यशीलेन ] = अंधआर चिअ लोअणाणं सच्चसीलेन ॥ २५

च्चिअ इति । यथा ॥ ते च्चिअ धण्णा=[त एव धन्या:] ॥ ते च्चेअ सुउरिसा [= त एव सुपुरुषाः] ॥४।३॥

२२६ आनन्तर्य्ये तु णवरि केवले णवरं स्मृतम् ।
मुधेत्यर्थे मोरउल्ला निर्द्धारे निश्चये वले ॥४।४॥

५ आनन्तर्येति ।

णवरि अ से रहुवइणो = [अनन्तरम् च तस्य रघुपते.] ॥

केवले इति । [ईक्षति राम केवलो भुवनानि =] इक्खइ रामो णवर भुअणाणि ॥

मुधेति । एक: निपात. ॥

१० निर्द्धारेति । वले पुरिसो धणंजओ खत्तिआणं [पुरुषो धनञ्जय एव क्षत्रियाणाम्] ॥ वले सीहो ॥ सिंह एव इत्यर्थ. ॥४।४॥

२२७ किलार्थे वा किर-हिर-इर संभावने अइ निवारणे अलाहि स्यात् ।
अण-णाई नञोर्थके माइं मार्थे वेव्व वेव्वे भयामन्त्रणवारणे ॥४।५॥

किलेति । कल्लं किर खरहिअओ = [कल्यं किल खरहृदय] ॥ तस्स हिर

१५ [= तस्य किल] ॥ पिअवअंसो सो इर दिट्ठो जणो अह्मेहिं [प्रियवयस्य: स किल दृष्टो जनः अस्माभि] ॥ पक्षे एवं किल तेण सिविणए भणिअं एवं किल तेन स्वप्ने भणितम् ॥

संभावेति ॥ अइ देवर किं न पेच्छसि आयास किं मुधा पलोएसि ॥

निवारेति ॥ अलाहि किं वा इएण लेहेण ॥

२० अणेति । [अचिन्तितम् =] अणचिंतिअं ॥ णाइ करेसि रोस = [मा कुरु रोषम् ।

मा इति । माइं काहीअ रोसं = मा कार्षीद्रोषम् ॥

वेव्वेति ॥ [मा प्रियसखि =] वेव्व पिअसहि ॥ वेव्वे मुरले वहसि पाणीअ ॥४।५॥

२५ २२८ धिग्धिगित्यस्य छि छि स्यात् धिगस्त्विति धिरत्थु च ॥
हद्धीति हा धिगर्थे निर्वेदे धिकि धाह च ॥४।६॥

धिगीति । धिगित्यस्यार्थे धाह इति निपात । धाह हा । धाह ॥

२२९ दे आभिमुख्ये सख्याभिमन्त्रणे मामि हलाहले ।
संभावने विस्मये च वितर्के निश्चये हु खु ॥४।७॥

३० दे इति ॥ अभिमुखीकरणार्थे दे इति प्रयोज्यम् ॥ हे प्रसीद सुन्दरि = दे पसिअ सुंदरि ॥

सख्येति । सख्या आमन्त्रणे एते स्युः ।

माम्मि सरिसक्खराण्या विअत्थि विसेसो पयं पि अणाग ।

णेहभरिआण अण्णो अण्णो उण रोसभरिआण हला पेच्छ पेच्छ ॥

अण्णो कोवि सहाओ वम्महसिहिणो । हले हआसस्स । णिव्वाइ णीरसाणं हिअए सरसाण पज्जलइ । ५

पक्षे सहि सउणिए ॥

संभावेति ॥ तवीउं ण हु णवर इम ॥ [एत खलु हसति] ॥ एअं खु हसइ ॥

विस्मये—को हु एसो दससिरो [ = कः खल्वेष ] दशशिरा ] ॥

वितर्के—ण हु एसा संगहिआ [=न खल्वेषा सगृहीता] ॥ मेहो खु धूमो खु [ = मेघ. खलु धूमः खलु ] ॥ १०

बाहुलकादनुस्वारात्परो हुन्नं प्रयुज्यते ॥ किन्नु खलु एतत् = किं खु एद ॥४।७॥

२३० क्षेपे च सुरताक्रोशे संभाषे च हरे इति ।

थू कुत्सायाम् ओ तु वार्थे पश्चात्तापे च सूचने ॥४।८॥

२३१ अनुकम्पे विकल्पे च निश्चये स्याद्वणे इति । १५

मणे विमर्शे आश्चर्येम्भो अप्पणो स्वयमर्थके ॥४।९॥

क्षेप इति ॥ हरे णिल्लज्ज [ = हे निर्लज्ज ] ॥ [ अरे बहुवल्लभ = ] हरे बहुवल्लह ॥ [ हरे पुरिसा ] ॥

थू इति । थू णिल्लज्जो लोओ [ = धिक् निर्लज्ज लोक ] ॥

ओ इति ॥ विकल्पार्थे ॥ ओ विरएमि णहअले ॥ ओ णम एतद् गाढमालिट्ठो ॥ २० ओ अविणीद ॥

अन्विति । दासो वणेन मुच्चइ = दासोनुकम्प्यो न मुच्यते ॥ होइ वणे न होइ = भवति वा भवति ॥ वणे देमि = निश्चय ददामि ॥

मणे इति ॥ मणे सूरो = किंस्वित् सूर्य ॥

आश्चर्य इति । अम्भो कह पारिज्जइ = कथ पार्यते शक्यत इत्यर्थ. । २५

अप्पेति ॥ अप्पणो विअसंति कमलाइ = [ स्वयं विकसन्ति कमलानि ॥ पक्षे सअं चेअ मुणसि करणिज्ज [ स्वयमेव जानासि करणीयम् ॥ ] ४।९॥

२३२ प्रत्येकमियत्तेअं पाडिक्कं पाडिएक्कं च एक्कसरिअं ।

सम्प्रति शैध्र्ये च स्यादितरथा इहरा ॥४।१०॥

प्रत्येकेति । प्रत्येकमित्यस्यार्थे त्रयम् ॥ ३०

एक्केति । एक्कसरिअ साम्प्रतं शीघ्रं वा ॥

इतरेति । पचे इअरहा ॥४।१०॥

२३३ अव्वो संभाषणे दुःखे विषादे विस्मये भये।
पश्चात्तापेपराधे च सूचनादरयोरपि ॥४।११॥

अव्वो इति ॥ किमिण ॥

५ अव्वो किमिया किमिया । अव्वो दलति हिअअं।
अव्वो किमेव देव्वेण कअ अव्वो हरति हिअअ ॥
इत्यादि ॥४।११॥

२३४ किणो प्रश्ने पिवी एवे इ-जे-राः पादपूरणे ॥४।११॥

किणो इति । किणो धुवसि ।

१० पिवी इति । नियमार्थे पि वि एतौ स्त ॥
पिवि अप्यर्थे ॥
इजे इति ॥ इ-जे-र अमी पादपूरणे स्यु ॥

अ-इ-वज्ञामि द गाम तत्थ अ पेक्खामि पिअअमा जे ।
अणुहोमि न णअणसुह करोमि जीअ कअत्थअ ॥

१५ इह पुणरुत्तमिति कृतकरणे इति न पठ्यते । पुनरुक्तशब्दादेव सिद्धे ॥

हुं दानपृच्छानिवारणे । ऊर्गर्हाक्षेपविस्मये । रेअरे रति सभाषणे कलहे च । वराङ्कल्पे इत्यादि तु न पठनीयम् । संस्कृतसमत्वात् ॥ अव्ययानामनेकार्थत्वाद-र्थान्तरेपि प्रयोक्तु शक्यत्वात् इति संक्षेपः ॥

इत्यव्ययानि ॥

२० ॥ इति अव्ययप्रकाश ॥

— ० —

## पञ्चमः प्रकाशः

# अथ सुबन्तप्रकाशः

एवं प्रकृतिषु संस्कृतासु ताभ्यः स्यादयो विभक्तय योज्यन्ते ॥ तत्रादौ तदुपयोगिन्यः संगृह्यन्ते ॥

२३५ टामोर्णस्य सुपोर्हेः क्त्वा चान्ते वा बिन्दुरागमः ॥
अत एभिस्सुपोः वा तु हिन्तो सुन्तो हिषु भ्यसः ॥५।१॥

टामोरिति । टाया आमश्चादेशो यो ण यश्च सुप्सप्तमी बहुवचन यश्च हिर्भि- ५
सादेश क्त्वा च प्रत्ययः एषामन्ते बिन्दुरागमो वा स्यात् ॥ [ देवेन कृतम् = ] देवेण कअ ॥ देवेण ॥ [ देवानां ग्राम = ] देवाण गामो । देवाण ॥ [ देवेषु= ] देवेसु । देवेसु ॥ [ देवै = ] देवेहि । देवेहि ॥ क्त्वा—[ दृष्ट्वा = ] दट्ठूण । दट्ठूण ॥

अत इति । अकारस्य ए स्याद्भिसि सुपि च ॥ [ देवै = ] देवेहिं । [देवेषु=] १०
देवेसुं ॥

वा स्विति ॥ भ्यस आदेशेषु हिन्तो-प्रभृतिषु अत एत्व वा स्यात् ॥ [ ग्रामेभ्य = ] गामेहिन्तो । गामाहिन्तो । गामेसुन्तो । गामासुन्तो । गामेहि । गामाहि ॥ भ्यसः किम् ॥ ङसेस्तु गामाहिन्तो [ ग्रामात् ] ॥५।१॥

२३६ दीर्घोत्तोदोमुखेन्येषां स्याम् जस् शस् लुक् हि सुप्स्वपि । १५
सर्गे तोडो सैषयोर्वा धेर्वा दीर्घोत्र वा स्वरः ॥५।२॥

दीर्घो इति ॥ ङसेस्तो-दो-दु-हिन्तो-हि-लुक । सुन्तोन्तिमो भ्यस । [प्राकृत-चन्द्रिका ५।२ ] । तेषु दो-प्रभृतिषु परेषु अकारस्य दीर्घ स्यात् ॥ [ ग्रामात् = ] गामाओ । गामाउ । इत्यादि ॥

शौरसेन्यां तु गामादो । गामादु ॥ २०

अन्येषामिति । अदन्तादन्येषाम् इदन्तादीनां सौ अमि जस्-शसोश्च लुकि भिसादेशे हौ सुपि च दीर्घ स्यात् । अपिशब्दात् दो-प्रभृतिष्वपि दीर्घ स्यात् ॥ [ कवे. = ] कईदो । कईदु ॥ [ कविभ्य = ] कईहिन्तो । कई ॥ [कवीनाम् =] कईण । कईण ॥ [ कवी इमे = ] कई एदे । [ कविषु = ] कईसु ॥

जश्शसो लुकीति किम् ॥ हरय' तिष्ठन्ति= ] प्रेक्षस्व वा । हरिणो हरिओ २५
चिट्ठन्ति पेच्छ वा ॥

एतत्सर्वं यथास्थान स्फुटयिष्यते ॥

तत्रादन्ताद् राम-शब्दात् सौ परे राम + स् इति स्थिते सोर्विसर्गे कृते रामः इति सिद्धं रूपम् ।

सर्गं इति । अदन्तात्परस्य विसर्गस्य स्थाने डो इत्यादेशः स्यात् ॥ डित्त्वा

५ ट्टिलोप. ॥ रामो । सर्वतः = सव्वओ ॥ कुत = कुदो ॥

सैषेति । तद् एतद् शब्दप्रभवयो स एष इति रूपयो सम्बन्धिनो विसर्गस्य डो वा स्यात् ॥ [ स देव = ] सो देवो । एस रामो [ = एष राम· ] ॥

धेर्बेति । अत परस्य धे सम्बुद्धेर्डो वा स्यात् । [ हे राम = ] हे रामो । पक्षे लोप्योन्त्यो हल् । इति स्-लोप । हे राम ॥

१० दीर्घ इति । अत्र धि-विषये सर्व एव स्वरो दीर्घो वा स्यात् ॥ [ हे राम = ] हे रामा ॥ स्वरग्रहणान्नात एव । तेन हे हरी । हे हरि । = [ हे हरे ] ॥ [ हे गुरो ] = हे गुरू । गुरु ॥ द्वयोर्बहुवचनमेव ॥

रामास् इति सिद्धे रूपे लोप्योन्त्योहल् रामा ॥ मोनुस्वार [ रामम् = ] रामं ॥५।२॥

१५ २३७ शसो डे भिस् स्वरात् हिः स्यात्

स्सङसष्टामोर्णं ङि म्मि वा ॥

ङसेः त्तो-दो-दु-हिन्तो हि

लुकः सुन्तोन्तिमोभ्यसः ॥५।३॥

शसो इति ॥ अत परस्य शसो डे स्यात् । डित्त्वाट्टिलोप । [ रामान् २० प्रेक्षस्व = ] रामे पेक्ख ॥ टायां सिद्धमेव रामेण ॥ टामोर्णस्य इत्यादिना पक्षे बिन्दु रामेणं ॥

भिसिति । स्वरात् सर्वस्मादपि भिसो हि स्यात् । अत एभिस्सुपो· इत्येव वा बिन्दु । [ रामै = ] रामेहिँ । रामेहि ॥ स्वरोक्ते हरीहिं । हरीहिँ । हरीहि । [ = हरिभि. ] ॥ [ गुरुभि. = ] गुरूहिं, गुरूहि ॥

२५ चतुर्थ्या षष्ठी ॥ स्सेति ॥ षष्ठ्या ङस् इत्यस्य द्विसकार आदेश. स्यात् । [ रामस्य = ] [ हरे = ] हरिस्स ॥ [ गुरोः = ] गुरुस्स ॥

तादर्थ्यङेस्तु पक्षे रामाअ [ = रामाय ] । हरये [ = हरए ] इत्याद्यपि ॥

टा इति ॥ टा-आम् एतयोर्णं आदेश । टा-ग्रहणमादन्तार्थम् ॥ [ हाहानाम् = ] हाहाण ॥ [ रामाणा = ] रामाण । रामाणं ॥

३० ङि इति । स्वरात्परस्य सप्तम्या ङे म्मि इति द्विमकार आदेश. स्याद् वा ॥ [ रामे = ] रामम्मि ॥ [ हरौ = ] हरिम्मि । [ गुरौ = ] गुरुम्मि ॥ पक्षे रामे ॥

ङसेरिति ॥ ङसे पञ्चम्याः स्थाने षडादेशाः स्युः । [ रामात् आगत. = ] रामत्तो आगओ ॥ दीर्घो तोदो सुक्के इति दीर्घः ॥ क ग च—इति दलोपः । रामाओ । रामाउ ॥ शौरसेन्यां द एव । रामादो । रामादु ॥ रामाहिन्तो रामाहि ॥ लुकि दीर्घे रामा ॥

सुन्तो इति ॥ अत परस्य भ्यसः सोप्रभृतयः षडादेशः । तत्र लुकमुद्धृत्य तस्य स्थाने सुन्तो इति निर्माय तदन्तिमा· प्रयोज्या· ॥ रामत्तो ॥ रामओ रामाउ ॥ शौरसेन्यां रामादो रामादु । वा तुहिन्तो सुन्तो हि सु भ्यस इति एवं वा रामेहिन्तो । रामाहिन्तो । रामेहि । रामाहि । रामेसुन्तो । रामासुन्तो ।

षष्ठी तु न साधिता ॥

ङि म्मि वा ॥ [ रामे = ] रामम्मि । रामे ॥ १०

अत ए भिस्सुपोः इत्येत्वम् ॥ वा बिन्दु. । [रामेषु =] रामेसुं । रामेसु ॥

एव केशवमाधवगोविन्दादयः ॥

अत इति तपरत्वात् न डो ङे लोप्योन्स्यो हल् [ हाहा· = ] हाहा ॥ [ हाहान् = ] हाहा । सम्बोधनेप्येवम् । हे-प्रयोगोनावश्यक । हाहा । शसि हाहान् । हाहा. । इति सिद्धौ अन्त्यलोप । हाहा ॥ १५

द्वयोरप्येवम् । टाम्नोर्ण । वा बिन्दु ॥ हाहाणं । हाहाण । तपरत्वान्नात एत्वम् ॥ हाहाहिं । हाहाहि ॥

चतुर्थ्या षष्ठी ॥ संयोगे ह्रस्वता इति ह्रस्व. । हाहस्स । हाहाण । हाहाणं ॥ ह्रस्वः । हाहत्तो । हाहाओ । हाहादो । हाहाउ । हाहादु । हाहाहिन्तो ॥५।३॥ २०

हिलुको प्राप्तयो ।

२३८ नादन्तदिर्ङसिभ्यस्-हिङसेर्लुग् ङेर्म्मि डा शसः ।

मागध्यामत एत्वं सौ पुंसि डाहस्तु वा ङसः ॥४।४॥

नादन्तेति ॥ आकारान्तादेः परयोः ङसिभ्यसोर्हि ङसेश्च लुक् न स्यात् ॥ तेन ङसेस्त्तोदो-दु-हिन्तो इति चत्वार एव । भ्यसोपि त एव सुन्तोधिका पञ्च ॥ २५ हाहत्तो । हाहाओ । हाहादो । हाहाउ । हाहादु । हाहाहिन्तो हाहासुन्तो ॥ अत इत्युक्तैत्वं न ॥

षष्ठी प्राग्वत् ॥

ङेर्म्मीति । आदन्तादे· परस्य ङे. सप्तम्याः म्मिरेव नित्य स्यान्न तु विकल्प इत्यर्थं । ह्रस्व. । हाहम्मि ॥ तपरत्वान्न एत्वम् अत एव हाहासु । वा बिन्दु. । ३० हाहासुं ॥

डा शस इति । आदन्तात्परस्य शसो डा भवति । आतो धातोः इति आलोपे प्राग्वत् सिद्धिः । सोमपा पेक्ख = [ सोमपां प्रेक्षस्व ] ।। शेषं हाहावत् ।। एवं कीलाल-क्षपा-प्रभृतयः ।।

मागध्यामिति । मागध्या प्राकृते सौ परे अत एत्वं स्यात् पुंसि ।। [ एष पुरुषः = ] एशे पुलिशे । पुंसि किम् । जलं [ = जलम् ] ।। अत किम् । हाहा [ = हाहा. ] ।। गिरि = गिली ।।

डाह इति ।। अतो ङसो डाहो वा स्यान्मागध्याम् । टिलोपः ।। [ कस्य ग्राम = ] काह गामो । पक्षे कस्स [ गामो ] ।।५।।७।।

२३९ आमो वा डाहँ नासिक्यः स्यादहं-वयमोर्हगे ।।

१० अतो ङसेस्तु पैशाच्यां डातो डातू प्रकीर्तितौ ।।५।५।।

आमो इति । अदन्तात्परस्यामो वा डाहँ स्यात् । स चानुनासिकान्तः ।। [ शयनानाम् = ] शयणाहँ ।। [ गृहाणाम् = ] घराहँ ।। अम्हाहँ = [ अस्माकम् ] । [ युष्माकम् = ] तुम्हाहँ [ सरितानाम् = ] सरिआहँ ।। पक्षे शयणाणं इत्यादि ।।

स्यादिति ।। अहवयमित्येतयो स्थाने हगे इत्यादेश स्यात् । हगे शक्काल-१५ दाणतित्थणिवाशी धीवले = अहं सत्कारदानतीर्थनिवासी धीवर ।। राजान ।।

अतो इति । पैशाच्यामत परस्य ङसेरेतौ स्तः । तुमातो । तुमातु त्वत् ।। ममातो । ममातु [ = मत् ] ।।५।८।

२४० टया तदिमोर्नेन नाए तु स्यात् स्त्रियां तयोः ।।

धौ दीर्घो वेदुतो क्लीबे जस ओ वो उ वा तयोः ।।५।६।।

२० टया इति ।। तृतीयैकवचनेन सह तदिदमो स्थाने नेन स्यात् । [ अनेन-कृतम् = ] नेनकअ ।।

नाए इति । पैशाच्यां तयो तदिदमोः टाप्रत्ययान्तयोः स्त्रिया नाए इत्यादेश स्यात् ।। [पूजितश्चानया कुसुमप्रकरेण = ] पूजितो च नाए कुसुमप्प-अरेण ।।

२५ अनयोरन्ये विशेषा वक्ष्यन्ते ।। शेषं प्राग्वत् ।।

हरिगुरुभ्या सौ स्याम्-जस्-शस्-ङस्-हि सुप्स्वपि इति दीर्घ ।। लोपयोन्त्यो हल् इति सिलोप. । [हरि । गुरु ] हरी । गुरू ।।

धौ इति । हे हरि । हे गुरु ।। हे हरी । हे गुरू ।। अक्लीबे किम् । [ हे मधु = ] हे महु ।। हे दहि ।।

३० जस् इति ।। इदुद्भ्या परस्य जसः ओ वो उ इति त्रय स्यु । तत्संनियोगे च तयोरिदुतो स्थाने अत्व च वा स्यात् ।। [ हरय ] हरओ । हरिओ । हरिवो

हरवो । हरिउ । हरउ ॥५।६॥

२४१ जश्शसोर्णो-लुकौ वाथाक्लियां ङसिङसोश्च णो ॥

क्लीबेऽप्यम्-स्योरिन्दुबिन्दू जश्शसोर्वात्र लुक्नुमः ॥५।७॥

जस् इति । इदुदूभ्यां परयोर्जश्शसोर्णो इत्यादेशः । पक्षे लुक् वा स्यात् । अस्त्रीलिङ्गे तु ङसिङसोरपि णो वा स्यात् । वाग्रहणात्पक्षे यथाप्राप्तमपि ॥ ५
हरिणो । गुरुणो । लुक्पक्षे अन्येषां सि-आम्-जस्-शस्-लुक्-हि-सुप्स्वपि इति दीर्घ. ।
हरी । गुरू ॥ हरिं गुरु ॥

णो जश्शसोः । हरिणो । हरी ॥ गुरुणो । गुरू ॥ सिद्धरूपे हरिणा । गुरुणा ॥
अन्येषाम् इत्यादिना दीर्घः ॥ वा बिन्दु ॥ [अग्निभि = ] अग्गिहिं । अग्गीहिं ॥
[ गुरुभि । गुरुहिं । गुरूहिं । १०

चतुर्थ्याः षष्ठी ॥ अस्त्रिया ङसि-ङसोश्च णो । [ हरये हरे = ] हरिणो ॥
[ गुरवे । गुरोः =] गुरुणो ॥ पक्षे स्स । हरिस्स । गुरुस्स ॥ अन्येषामिति दीर्घ. ।
हरीण । हरीण ॥ गुरूण । गुरूण ॥

अथाक्लियामिति । णो वा ॥ हरिणो । गुरुणो । वा पक्षे ङसे त्तो-दो-दु-
हिन्तो । हरित्तो ॥ अन्येषा स्याम्-जस्-शस्-लुक्-हि-सुप्स्वपि इति अपि- १५
शब्दात् दोमुखेष्वनतोपि दीर्घ ॥ [ हरे = ] हरीओ । हरीदो । हरीउ । हरीदु ।
हरीहिन्तो ॥ नादन्तादेः इति हिलुकोर्निषेधः ॥ भ्यसि [ हरिभ्य = ] हरित्तो ।
हरीदो । हरीओ । हरीदु । हरीहिन्तो । हरीसुन्तो ॥

नादन्तादे इति हिलुकोनिषेध ॥

षष्ठी प्राग्वत् ॥ २०

[ हरौ = ] हरिम्मि ॥ [ हरिषु = ] हरीसु । हरीसुं ॥

एव गुरोरपि ऊह्यम् । एवम् अग्निमान्वादय. ॥

क्लीब इति ॥ क्लीबे वर्तमानस्य नाम्नोन्ते इन्दुरनुनासिको बिन्दुरनुस्वारश्चाग-
गम· स्यात् असम्बुद्धौ सौ अमि च परे ॥ [वनम् = ] वण । [ धनम् = ] धणं ।
[ प्रेम = ] पेम्मं । [ दधि = ] दहिं । [मधु =] महुं । [ तिष्ठति प्रेक्षस्व वा = ] २५
चिट्ठदि पेक्ख वा ॥

एवमनुनासिके प्युदाहार्यम् ॥

अधीति किम् । हे वन । धन । दधि । हे मधु = ] हे वण । हे धण । हे
दहि । हे महु ॥

जश्शसोरिति । क्लीबाज्जश्शसोस्तु इन्दु-बिन्दू वा स्त. ॥ तत्र च कृतयोर्लुमो ३०
लोपश्च स्यात् । सन्नियोगशिष्टत्वाल्लोपाभावपक्षे नेन्दु-बिन्दू । [ वनानि तिष्ठन्ति

प्रेक्षस्व वा = एवं [ दधीनि मधूनि = ] दहीइँ । दहीइं । दहीणि । महूहिँ । महूहिँ । महूणि ॥

शेषं रामवत् । तदयं निगर्वं (?) । वणँ । वणं ॥ घेलुंका लुप्तत्वान्न डोदीर्घौ ॥ अमौ इत्युक्ते नेन्दुबिन्दू ॥ हे वण । वणाइँ । वणाइं । वणाणि । वणं ।
५ वणँ ॥

शसि जस्-वत् ॥ वणेण । वणेणं । वणेहि । वणेहिं । वणस्स । वणाण । वणाणं ॥ ङसौ वणत्तो । वणाओ । वणाओ । वणादु । वणाउ । वणाहिन्तो । वणाहि । वणा ॥

भ्यस्योपि-वणत्तो । वणादो । वणादु । वणाहिन्तो । वणेहिन्तो । वणाहि ।
१० वणेहि । वणासुन्तो । वणेसुन्तो ॥

षष्ठी तूक्ता ॥ वणम्मि । वणे ॥ वणेसु । वणेसुं ॥ दहिं । दहिँ । हे दहि ॥ दहीइँ । दहीइं । दहीणि । दहिँ । दहिं ॥

शसि जस्-वत् । दहिणा । दहीहिं दहीहि ॥ ङसि दहिणो । दहिस्स । दहीणं । ङसौ । दहिणो । दहित्तो । दहीदो । दहीओ । दहीदु । दहीउ । दहीदु ।
१५ दहीहिन्तो ।

भ्यसि दहीसुन्तो इत्यधिकम् । षष्ठी प्राग्वत् । दहिम्मि । दहीसु । दहीसुं ॥ एव महु ॥

स्त्रियां बुद्धिधेनुभ्यां लोप्योन्त्यो हल् इति सेर्लोप ॥ अन्येषां सि-आम्-जस् इति दीर्घ ॥ बुद्धी । धेणू ॥ अक्लीब इत्युक्तेर्धौ वा दीर्घ. ॥ हे बुद्धी ।
२० हे धेणू । हे धेणु ॥५।६॥

२४२ स्त्रियां तु जश्-शसोः सप्राग्दीर्घः ओदुल्लुकस्त्रयः ।
टाङसङीनामादेदित्सप्राग्दीर्घाः ङसेस्तु वा ॥५।८॥

स्त्रियामिति । प्राग्दीर्घसहिता ओत् उत् लुक् इति त्रय. स्युः । तकारोसन्देहार्थं । बुद्धीओ । बुद्धीउ । बुद्धी ॥ धेणूओ । धेणूउ । धेणू ॥
२५ त्रिग्रहणम् जस ओ-वो-उ-वा तयो इत्यस्य बाधनार्थम् ॥ स्त्रियां किम् ॥ [हरय·=] हरिवो ॥ [दधीनि=] दहीइ । [बुद्धिम् =] बुद्धिं ॥ [धेनुम् =] धेणुं ॥ शस्यपि जस्वत् ॥

टाङस् इति । एषां प्रत्येकम् एते अत् आत् एत् इत् इति चत्वार आदेशा. स्यु. पूर्वस्य दीर्घश्च ॥ ङस्त्येते वा स्यु ॥ तकारोसन्देहार्थं । बुद्धीअ । बुद्धीआ ।
३० बुद्धीए । बुद्धीइ कअ [ = बुद्ध्या कृतम् ] ॥ धेणूअ । धेणूआ । धेणूए । धेणूइ कअ [ धेन्वा कृतम् ] ॥ [ बुद्धिभि· = ] बुद्धीहिं । बुद्धीहिँ । धेणूहिं धेणूहिँ ॥

चतुर्थ्या. षष्ठी । तत्र ङस् टावत् ।। बुद्धीणं । धेणूणं [= बुद्धीनाम् । धेनूनाम् ] ।। ङसिरपि टावत् ।। पक्षे बुद्धित्तो बुद्धीओ । बुद्धीदो । बुद्धीदु । बुद्धीउ । बुद्धीहिन्तो ।।

एव धेनोरपि ।।

भ्यसि बुद्धीसुन्तो इत्यधिकम् ।। ५

ङस् टावत् । बुद्धीण । धेणूणं ।। [ बुद्धीनाम् । धेनूनाम् ] ।। बुद्धिम्मि । धेणुम्मि [ = बुद्धौ । धेनौ ] ।। बुद्धीसु । बुद्धीसुँ ।। धेणुसु । धेणुसुँ ।।

सिलोप । बाला ।। [ नदी = ] णई ।। [ वधू = ] वहू ।।५।७।।

२४३ धावाप एद्वा ईदूतोर्ह्रस्वः सर्वत्र तु क्विपः ।

स्त्रियां स्वरस्य ह्रस्वोमि ईत अ वा सि-जश्शसाम् ।।५।८।। १०

धावेति सबुद्धौ आप एत्व वा स्यात् ।। हे बाले । हे बाला ।। आप. किम् । हे माउच्छा । हे पिउच्छा [हे मातृष्वसर् , हे पितृष्वसर् ।। हे अत्ता ।। मातृष्वसृ-पितृष्वसृ-श्वश्रूणामेते आदन्ता निपातिता. ।। केचित् धावाप ओत्वमपीच्छन्ति ।। अइ दीहराइँ सीसे दीसंति वसपत्ताइँ अम्मो मणामि भणिए तुम्हाण वि पंडरा पुट्ठी ।।

[ अति दीर्घाणि शीर्षे दृश्यन्ते वशपत्राणि । ] १५

अयि मणाभि भणिते युष्माकमपि पाण्डुरं पृष्ठम् ।।

ईदू इति ईदूतोर्ह्रस्व. । धौ इत्येव । हे णइ [ = हे नदि ] ।। हे लच्छि [=हे लक्ष्मि ] ।। [ हे ग्रामणि = ] हे गामणि ।। [ हे वधु = ] हे वहु ।। [ हे खलपु ] = हे खलपु ।।

सर्वत्रेति । क्विप्प्रत्ययान्तस्य नाम्न ईदूतो. सर्वत्र ह्रस्वः स्यात् । गामणिणा । २० खलवुणा । गामणिणो । खलवुणो । गामणिकुलं । खलवुघरं ।।

जसि तु बालाओ । बालाउ । बाला ।। णईओ ।। णईउ । णई ।। वहूओ । वहूउ । वहू ।।

स्त्रियां तु जश्शसोः प्रागदीर्घः ओदुल्लुकश्चय इति आदेशा. ।। स्त्रियामिति । अमि परे स्वरमात्रस्य ह्रस्व. स्यात् । स्वरोक्तिरीदूतोर्निवृत्त्यर्था ।। बालं । णइं । २५ वहु । गामणिं ।।

ईत इति । ईदन्तात्परेषां सि-जस्-शसां स्थाने आत्वं वा स्यात् । एसा हसन्तीआ सहीआ आअच्छंति गोरीआ तरुणीआ चिट्ठन्ति पेच्छ वा [ एताः हसन्त्यः सख्य· आगच्छन्ति गौर्य. तरुण्यः तिष्ठन्ति । एताः हसन्त्य. सखी गौरी तरुणीः प्रेक्षस्व वा । ] ।। पक्षे यथाप्राप्तं शसि बालाओ । बालाउ । बाला । ३० [ बाला. ] ।। एवं णई-वहू-शब्दयोरपि ।।५।८।।

२४४ नातष्टा-ङसि-ङस्-ङीनामात ईबापौ निरङ्कुशौ ॥
हरिद्राछाययोरीद्वा स्वस्रादीनां तु डा स्मृतः ॥५।१०॥

नात इति । टा-ङस्-ङीनाम् अत् आत् एत् इत् स प्राग्दीर्घा ङसेस्तु च। इति प्राप्त आकार आदन्तान्न स्यात् ॥ बालाअ । बालाए । बालाइ । आत· किम् ॥
५ णईअ [नद्या] ॥ णईआ [नद्या] णईए । णईइ [नद्या ] वहूअ । वहूआ । वहूए । वहूइ कअं ॥ [ = वध्वा कृतम् ] ॥

चतुर्थ्यां षष्ठी ॥ तत्र ङसष्टावत् । बालाआ । बालाणँ । णईआ । णईणँ । वहूणं वहूणँ ।

ङसेरपि टावत् ॥ भ्यसि पक्षे त्तो प्रभृतयोपि । षष्ठी तूक्ता ॥ ह्रस्वस्तु युक्परः
१० इति ह्रस्व । बालम्मि । वहुम्मि । णईम्मि ॥

ईबापौ इति ॥ स्त्रिया विहितावीबाप्प्रत्ययावनियमेन स्यातां बहुलमिति यावत् ॥ कइ । कीअ । कया ॥ जाइ । जीअ जया ॥ ताइ । तीए । तया ॥

इमाउ । इमीए । अनया ॥

कुरुचरी । कुरुचरा ॥
१५ साहणी । साहणा [ = शाधना ] सुप्पणही । सुप्पणहा [ सूर्पणखा ] हसमाणी । हसमाणा । इत्यादि यथादर्शनमूह्यम् ॥

हरिद्रेति । हलद्दी । हलद्दा । छाही । छाहा [ छाया ] ॥

स्वस्रेति । डित्वाट्टिलोप· ॥ ससा । णणदा । दुहिआ । जाआ । वाला । वद्रूपन्नेयम् ॥
२० २४५ स्यादावारःऋतः पित्रादेस्त्वरः सौ तु आन वा ॥५।११॥
धौ त्वद्वरं च पित्रादेरुद्दतामस्यमौषु वा ॥

स्यादाविति ॥ स्यादौ परे ऋते आर स्यात् ॥ सर्गो तो डो । कत्तारो । कत्तारा ॥ कत्तारं । कत्तारे । कत्तारेण । कत्तारेणँ ॥ कत्तारेहिं । कत्तारेहिँ । कत्ताराओ । कत्ताराओँ । कत्तारत्तो । कत्ताराउ । कत्ताराउँ ॥ कत्ताराहिन्तो ।
२५ कत्ताराहि । कत्तारा ॥ भ्यसि । कत्तारासुन्तो । कत्तारेसुन्तो । कत्तारा । हिन्तो । कत्तारेहिन्तो । कत्ताराहि । कत्तारेहि ॥ इत्यधिकम् ॥ लुग्वर्जम् । कत्तारस्स । कत्ताराणं । कत्तारम्मि । कत्तारे । कत्तारेसुं । कत्तारेसुँ ॥ रामवद्रूपमुन्नेयम् ॥ एव भर्तृहर्तृनेत्रादयस्तृजन्ता· । लुप्तस्यादिविवक्षया भत्तार-विहिअ ॥

पित्रेति । पितृमातृभ्रातृयातृजामातृ-दुहित्रादीनामौणादिकानाम् ऋत· स्यादौ
३० अरः स्यात् ॥ आरस्यापवाद· ॥ पिअरो । पिअरा । पिअरमित्यादि ।

सौ तु इति ॥ सौ तु परे ऋकारमात्रस्य आत्वं वा स्यात् । कत्ता । पिआ

[=भण्यते] । लब्भइ [लभ्यते] ।। कत्थइ [=कथ्यते] ।। भुज्जइ [=भुज्यते] ।। छुप्पइ । छिप्पइ [ = स्पृश्यते ] ।।

पक्षे गमिज्जइ इत्यादि ।।

तृ इति । एषामृकारस्य ईर स्याद्वा यको लुक् च ।। तीरइ । तरिज्जइ । [ = तीर्यते ] ।। जीरइ । जरिज्जइ [ = जीर्यते ] ।। हीरइ । हरिज्जइ [=ह्रियते] ।। ५ कीरइ । करिज्जइ [ = क्रियते ] ।।

सिप्प इति ।। सिप्पइ । स्निह्यते । सिच्यते वेत्यर्थः ।। ७ । २२ ।।

३०६ अर्जेर्विढप्प आढप्प आरभेर्घेप्प तु ग्रहेः ।
जानातेर्णव्व-णज्जौ स्तः स्पृशतेः छिप्प इत्यपि ।।७।२३।।

अर्जेरिति । विढप्पइ । विढविज्जइ ।। १०

आढेति आढप्पइ । आढवीअइ ।
आढविज्जइ ।।

घेप्पेति । घेप्पइ । गेण्हिज्जइ ।

जानेति ।। णव्वइ । णज्जइ । पक्षे ।।

जाणिज्जइ । मुणिज्जइ । [ = ज्ञायते ] ।। १५

स्पृशेति । छिप्पइ । पक्षे छिविज्जइ ।।७।२३।।

इति भाव-कर्मसिद्धि ।

३०७ इषुगमासूयमा छोन्तः छिद्भिदोस्तु नुमागमः ।
बुधयुधक्रुधसिधमुहां झोन्तस्य स्याद्द्विधोदितः ।।७।२४।।

इषिति । एषा च्छान्तादेश स्यात् । इच्छइ [=इच्छति] । इच्छिहइ ।। इच्छिउं ।। २० गच्छइ [=गच्छति] । गच्छिहइ [ गमिष्यति ] ।। जच्छइ [ = यच्छति ] ।। आसि उपवेशने । सयोगे ह्रस्वता ।। अच्छइ । अच्छिहिइ ।।

छिदिति । अन्त इत्यधिकार कथेर्व्वा इति यावत् ।। छिंदइ [ = छिनन्ति ] ।। भिदइ [ = भिनत्ति ] ।। छिन्दिहिइ [ = छेत्स्यति ] । भिन्दिहिइ[ =भेत्स्यति ] ।।

बुधेति । एषामन्त्यस्य द्विरुक्तो झ स्यात् । बुज्झइ [ = बुध्यते ] ।। जुज्झइ २५ [ युध्यति ] ।। कुज्झइ [ = क्रुध्यति ] ।। सिज्झइ [ = सिद्ध्यति ] ।। मुज्झइ [ = मुह्यति ] ।। ७ । २४ ।।

३०८ गृधेर्गिज्झो रुधे रुंध रुब्भ रुज्झाः ड सद्पतोः ।
वेष्टेर्वेढः समो वेल्ल उत्पूर्वस्य तावुभौ ।।७।२५।।

गृधेरिति । अस्याय निपात्यते ।। गिज्झइ ।। ३०

रुधेरिति । रुधइ । रुब्भइ । रुज्झइ । रुंधिहिइ ।।

ड इति । अनयो डान्तादेश. स्यात् ॥

सडइ [ = सीदति ] ॥ पडइ [ = पतति ] ॥

वेष्टेरिति । वेढइ । [ = वेष्टयति ]

सम्-पूर्वस्य वेष्टेर्वेल्ल स्यात् । सवेल्लइ ॥

५ उदिति । उत्पूर्वस्य वेष्टे वेढ—वेल्ल इति द्वावपि स्तः ॥ उदोद्लोपे कोषादेश इति वस्य द्वित्वम् ॥ उव्वेल्लइ । उव्वेढइ ॥७।२४॥

३०९ उद्विजेरुब्बिवो व्रजनृत्मदां चो द्विर्व रुदनमोः ।

संपद्यति स्विदादीनां द्विरुक्तो जोन्तिमो भवेत् ॥७।२६॥

उद्विजेरिति । उब्बिवइ । उच्चेवइ ॥

१० व्रजेति ॥ एषा द्विरुक्तश्चोन्तादेश. । वच्चइ । [व्रजति] । वच्चइ [=व्रजति] । णच्चइ [ = नृत्यति ] ॥ मच्चइ [ = माद्यति ] ।

व इति । अनयोर्वोन्तादेश स्यात् । रुवइ [=रोदिति] ॥ णवइ [=नमति] ॥

सपद्येति ॥ संपज्जइ । [ = सपद्यते ] ॥ सिज्जइ [=स्विद्यति] ॥ सर्वत्र ज्वराम् [ स्विद्यति ] इति वलोप ॥ सव्वंगं सिज्जिरीए [ = सर्वाङ्ग स्वेद-

१५ शीलाया इत्यर्थः ॥७।२६॥

३१० कथेस्तु वज्जरोप्पालपज्जराः पिसुणो वचः ।

बोल्ल सघोच्चुक-जपसीह-साहा भवन्ति वा ॥७।२७॥

कथेरेकादेशादेशा वा स्यु ॥ वज्जरइ । उप्पालइ । पज्जरइ । पिसुणइ । वचइ । बोल्लइ । संघइ । उच्चुक्कइ । जपइ । सीहइ । सीहइ । साहइ ॥ पक्षे

२० कहइ । कहेइ ॥७।२७॥

३११ णिव्वरो दुःखकथने ज्ञस्तु जाणमुणौ क्वचित् ॥

दुगुच्छश्च दुगुंछश्च ज्जुणश्च स्याज्जुगुप्सतेः ॥७।२८॥

णिव्वरेति । णिव्वरइ । दु ख कथयति इत्यर्थ ॥

ज्ञ इति । जानातेरेतौ प्रायेण स्तः । जाणइ । मुणइ । [ = जानाति ] ॥

२५ प्रायोभिधानात् म्नज्ञोर्णः इति णादेशोपि ।

जाणिअ । णाअ [ = ज्ञातम् ] ॥ जाणिऊण । णाऊण [ = ज्ञात्वा ] ॥ जाणं । णाण [ ज्ञानम् ] ॥

दु इति । दुगुच्छइ । दुगुछइ । ज्जुणइ [जुगुप्सते ] ॥ गलोपे—दुउछइ । पक्षे जुगुच्छइ । जुउच्छइ ॥७।२७॥

३० ३१२ बुभुक्षे र्णीरवो वीजे वोज्ज आचार जक्किपः ॥

ध्यागोर्झागौ उदोध्मस्तु धूमा श्रद्धस्तु सद्दहं ॥७।२९॥

बुभुक्षेरिति । णीरवइ । बुभुक्खइ ॥

बीजेरिति । आचारक्विबन्तस्य बीजे बोज्ज इत्यादेश । बीजबदाचरति = बोज्जइ । बीजइ ॥

ध्यागोरिति ॥ ध्यायतेर्गायतेश्च क्रमादेतौ स्तः ॥ अद्वा तिङ्व्यनदन्तेभ्य इति अकारागमः ॥ झाइ । झाअइ । झाण [ = ध्यायति । ध्यानम् ] ॥ गाइ । गाअइ  ५ [ = गायति ] । गाणं [ गानम् ] ॥

उदो इति ॥ उत्पूर्वस्य ध्मायतेर्धुमा इत्यादेश स्यात् । उद्धुमाइ । उद्धुमाअइ [ उद्धूमायते ] ॥

श्रद्ध इति । श्रत्पूर्वस्य धाञ सद्दह इति स्यात् । सद्दहइ श्रद्धाति इत्यर्थं ॥ जीअंति ण सद्दहिअ । [ जीवन्ति न श्रद्धितम् ] । सद्दहमाणो जीवो श्रद्धधानो  १० जीव ॥७।२९॥

३१३ पिबतेः स्युः पिज्ज-डल्ल-पट्ट-घोट्टा विभाषया ॥
उद्वातेर्वसुआओरुम्मा समः स्त्यायतेस्तु खा ॥७।३०॥

पिबेति ॥ पिज्जइ । डल्लइ । पट्टइ । घोट्टइ । पक्षे पिअइ ॥

उद्वेति ॥ उत्पूर्वस्य वा गतिगन्धनयोरित्यस्य एतौ स्त । वसुआइ । ओरुम्माइ ॥  १५

सम इति । सम परस्य ध्यै-स्त्यै-शब्द-संघातयोरित्यस्य खा इत्यादेश ॥ संखाइ [ = संधायति ] ॥ सखाअ [ = सस्त्यानम् ॥७।३०॥

३१४ निद्रातेरुंघ-ओहीरौ आइग्घो जिघ्रतेस्तु वा ॥
निरप्प-चिट्ठ-ठा-थक्काः स्थः उदः कुक्कुरोट्ट च ॥७।३१॥

निर्पूर्वस्य द्राते उंघ-ओहीर एतौ स्त । उंघइ । ओहीरइ ॥  २०

आइ इति ॥ आइग्घइ । आग्घाअइ ॥

निरप्पेति । तिष्ठतेरेते चत्वार स्यु. ॥ णिरप्पइ ॥ चिट्ठइ । ठाइ । ठाअइ । पट्ठाविओ=प्रस्थापितः ॥ थक्कइ ॥ बाहुलकात् क्वचिन्न । थाण [ = स्थानम् ] ॥ पत्थिओ [ = प्रस्थित ] ॥ उत्थिओ [ = उत्थित ] ॥

[ उद इति ] । उद. परस्य तिष्ठतेरेतौ स्त । उक्कुक्कुरइ । उट्ठइ [ = उत्तिष्ठति ] ॥७।३१॥  २५

३१५ वाप-व्वापौ म्लायते स्तः स्नातेरब्भुत्त इत्यपि ॥
क्षयतेर्झिज्जनिज्झरौ निर्मोनिम्माण णिम्मवौ ॥७।३२॥

वापेति ॥ वाइ । पव्वापइ ॥ मिलाइ [ = म्लायति ] ॥

स्नातेरिति ॥ अब्भुत्तइ । ण्हाइ [ = स्नाति ] ॥  ३०

क्षयेति ॥ झिज्जइ । णिज्झरइ ।

निर्मो इति । निर्-पूर्वस्य माङ मानेइत्यस्य एतौ स्त ॥ णिम्माणइ । णिम्मवइ ॥ [ निर्माति ] ॥७।३२॥

३१६ छादेर्णुमोवाल-णूम-ढक्क-पव्वाल संणुमाः ।
निवारि-पात्योर्णिहोडो मिश्रेर्वीसालमेलवौ ॥७।३३॥

छादेरिति । छद् अपवारणे इत्यस्य ण्यन्तस्यैतै षडादेशा. स्यु । णुमइ । उवालइ । णूमइ । ढक्कइ । पव्वालइ । संणुमइ । छाअइ [=छादयति ] ॥

निवारीति । निपूर्वस्य वृङ पतेश्च ण्यन्तयोरय स्यात् । णिहोडइ । पक्षे निवारेइ । पाडेइ [ निपातयति । निवारयति ] ॥

मिश्रेरिति ॥ वीसालइ । मेलवइ । पक्षे मिस्सेइ । मिश्रयति इत्यस्तु ॥३३॥

३१७ दूङस्तु दुमो धवलेर्दुमदूमौ विभाषया ।
विहोडाहोडौ तु ताडेस्तुलेरोहाम इत्यपि ॥७।३४॥

दूङ इति । दूङ व्यथने इत्यस्य दुम इत्यादेश । दुमेइ । दूयत इत्यर्थं । पक्षे दवइ ॥

धवेति । ण्यन्तस्य धवलयतेरेतौ वा स्त ॥ दुमइ । दूमइ । दूमिअ । पक्षे धवलइ ॥

विहोडेति । विहोडइ । आहोडइ । पक्ष ताडेइ ॥

तुलेति ॥ ओहामइ । तुलइ ॥७।३४।

३१८ ओलडोल्लुंड-पल्लत्था विरचेश्च स्पृहेः सिहः ।
तालिअट-भमाडौ स्तः भ्रमेरुग्गस्तु उद्घटेः ॥७।३५॥

ओ इति । विपूर्वस्य रिचिर पृथग्भावे इत्यस्य ण्यन्तस्यैते स्यु ॥ ओलडइ । उल्लुंडइ । पल्लत्थइ । पक्षे विरेअइ ॥

स्पृहेरिति । सिहइ । पक्षे फहेइ ॥

तालीति ॥ तालिअटइ । भमाडइ । पक्षे भमाडेइ । भामेइ । भमावेइ ॥

उग्ग इति । उत्पूर्वस्य घटेण्यन्तस्य उग्ग इत्यादेशो वा स्यात् । उग्गइ । उग्घाडेइ ॥

३१९ विप्पगालः पलावश्च हारवो नासवो नशेः ।
विउडश्च दृशेर्दाव दस देक्खव इत्यपि ॥७।३६॥

विप्पेति । ण्यन्तस्य नशे पञ्चैते स्यु ॥ विप्पगालइ । पलावइ । हारवइ । नासवइ । विउडइ । पक्षे नासइ ॥

दृशोर्ण्यन्तस्यैते त्रय. स्यु. । दावेइ । दसेइ । देक्खवइ । पक्षे दरिसइ ॥

३२० उद्धूलेर्गुंठ आसंघः संभावेर्णौ अपेर्जवः ।
उत्थंघोल्लाल-उप्पेल-गुलुगुंछाः स्युरुन्नमेः ॥७।३७॥

उद्धू इति । गुंठइ । पक्षे उद्धूलइ ॥ आसंघइ । संभावइ ॥
णौ इति । ण्यन्तस्य अपतेः जव इत्यादेशः । जवइ । पक्षे आवेइ ॥
उत्पूर्वस्य नमेर्ण्यन्तस्यैते चत्वारः स्युः । ५
उत्थंघइ । उल्लालइ । उप्पेलइ । गुलुगुंछइ ॥ पक्षे उन्नमइ ॥७।३७॥

३२१ वोक्कावुक्कौ विज्ञपेः प्रस्थापेः पट्ठवपेंडवौ ।
अर्प्पेरल्लिव-चच्चुप्प-पणामाः णिहुवः कमेः ॥७।३८॥

वोक्क इति । विपूर्वस्य ज्ञा इत्यस्य ण्यन्तस्यैतौ स्त । वोक्कइ । आवुक्कइ ।
पक्षे विण्णवइ । [ = विज्ञापयति ] ॥ १०
[ प्रस्थापे ] पट्ठवइ । पेंडवइ । पक्ष पट्ठावइ । [ = प्रस्थापयति ] ॥
अर्प्पेरिति । अल्लिवइ । चच्चुप्पइ । पणामइ । पक्षे अप्पेइ [ = अर्पयति ] ॥
णिहुव इति । स्वार्थे णिजन्तस्य कमे णिहुव इत्यादेश. । णिहुवइ । पक्षे
कामेइ ॥ [ = कामयते ] ॥७।३८॥

३२२ प्लावेरोंवाल-पव्वालौ कम्पेर्विच्छोल इत्यपि ॥ १५
प्रकाशे णुव्व आरोपे वलः रञ्जेस्तु राव च ॥७।३९॥

प्लावेरिति ॥ ओंवालइ । पव्वालइ । पक्षे ललोपे पावेइ ॥
विच्छोलइ । पक्षे कंपेइ [ = कम्पते ] ॥
प्रेति । णुव्वइ । पआसइ ॥ [ = प्रकाशयति ] ॥
आरो इति ॥ वलइ । आरोवेइ ॥ [ = आरोपयति ] ॥ २०
रञ्जेरिति । रावेइ । रंजइ ॥ ७।३९ ॥

३२३ स्यातामोग्गाल-वग्गोलौ वा रोमन्थयतेरपि ।
विकोशेः स्यात्तु पक्खोडः परिवाडो घटेरपि ॥७।४०॥

स्यातामिति ॥ ओग्गालइ । वग्गोलइ । रोमथइ ॥
विकोशेरिति ॥ पक्खोडइ । विकोसइ ॥ उभावेतौ नामधातू ॥ २५
परीति । परिवाडेइ ॥ घडेइ [ = घटते ] ॥७।४०॥

३२४ वेष्टेस्तु परिआलः स्याद्दोले रंखोल इत्यपि ।
क्रीञः किणः स्याद्वेर्वा केः भियो भाबीह-भीति वा ॥७।४१॥

वेष्टेरिति । परिआलेइ । वेढेइ ॥ [ = वेष्टयति ] ॥
दोलेरिति ॥ रंखोलइ । दोलइ [ = दोलयति ] ॥ ३०
क्रीञ इति ॥ किणइ । किणिअइ [ = क्रीणाति ] ॥

वेरिति । वे· परस्य तु क्रीम· क्के इत्यादेशो वा वा स्यात् ॥ विक्केइ । विक्किणइ । [ = विक्रीणाति ] ॥

मियो इति ॥ भाइ । भाइअं । बीहइ । [ = बिभ्यति ] ॥

बीहिअं । भीइ । भीओ ॥७।३१॥

५ ३२५ लुक्क-लिक्क-लिहक्क णिरिग्घ-णिवुक्का णिलीअ च ।

निलीङः षड् विलीङस्तु विरा अल्लीअ आलीङ ॥७।४२॥

लुक्केति ॥ निपूर्वस्य लीङ श्लेषणे इत्यस्यैते षडादेशा स्यु· ॥ लुक्कइ ॥ लिक्कइ । लिहक्कइ । णिरिग्घइ । णिवुक्कइ । णिलीअइ । पक्षे णिलिज्जइ ॥

विलीति ॥ वि-पूर्वस्य लीङो विरा इति स्यात् । विराइ ॥ विलिज्जइ ॥

१० अल्लीति ॥ आङ्पूर्वस्य लीङ अल्लीअ इति स्यात् ॥ अल्लीअइ ॥ अल्लीणो । आलिज्जइ ॥७।४२॥

३२६ रुञ्ज-रुण्टौ तु वा रौतेः श्रुवः सुणहणावपि ॥

भवतेर्हो-हुव-हवा उद्भुवस्तूब्भुअः कचित् ॥७।४३॥

रुञ्जेति ॥ रौतेरेते स्यु । रुञइ । रुण्टइ । रवइ ॥

१५ श्रवेति ॥ श्रु श्रवणे इत्यस्य एतौ स्त· ॥ सुणइ । हणइ ॥

भवेति च ॥ अस्यैते त्रयो वा स्यु ॥ होइ । होंति ॥ हुवइ । हुवति । हवइ । हवति । पक्षे भवइ ॥

उद्दिति ॥ उत्पूर्वस्य भवते· उब्भुअ इत्यप्यादेश स्यात् ॥ उब्भुअइ भत्तं ॥७।४३॥

२० ३२७ प्रभौ प्रभवतेर्हुप्पो द्विदेर्भ्यामितरत्र हुः ॥

निव्वडः स्यात्पृथक्स्पष्टे कर्त्तरि क्ते तु हूरपि ॥७।४४॥

प्रेति ॥ प्रपूर्वस्य भवते हुप्प स्यात्प्रभौ कर्तरि ॥ अंगे च्चिअ ण पहुप्पइ । न प्रभवतीत्यर्थः ॥ दोवि ण प्रहुप्पिरे बाहू ॥ [ = द्वावपि न प्रभवत बाहू ] ॥ पक्षे पहवेइ ॥

२५ दीति ॥ आभ्यामन्यत्र भवतेर्हुः स्यान्न ॥ हुंति । होंति ॥ हुवंति ॥ इतरत्र किम् । होइ । हुवइ । हवइ । भवइ ॥

निव्वेति ॥ पृथग्भूते स्पष्टे वा कर्त्तरि सति भवतेर्निव्वड स्यात् ॥ निव्वडइ = पृथग्भवति स्पष्टो वा भवति ॥

क्ते इति ॥ हूअ । अणुहूअ । पहूअ ॥ पक्षे अणुभूअं ॥७।४४॥

३० ३२८ कृञः कुणो भूतभविष्यत्क्त्वा-तव्य-तुमन्त्सु का ।

काणेच्छिते णिआरोस्य अमेर्वाबम्फ इत्यपि ॥७।४५॥

कु इति ॥ करोतेः कुणो वा स्यात् । कुणइ । पक्षे करइ ॥

भूतार्थेषु लङ्-लुङ्-लिट्सु भविष्यदर्थयोश्च लुट्-लृटोः क्त्वादिषु च परेषु कृञ. का इत्यादेशः स्याद्वा ॥ कासी । काही । काहीअ । अकरोत् । अकार्षीत् । चकार वा ॥ स्वरात् लङ्-लुङ्-लिटा सी-ही-हीइ ॥ काहिअ । कर्ता । करिष्यति ॥

वा धातोर्हि लुट्-लृटो. क्त्वा । काऊण । तव्य-काव्व्य । तुमुनिति । ५ पाणिनीय-प्रसिद्ध्या गृह्यते । काउ ॥

काणेति ॥ अस्य कृञ. काणेक्षितविषयस्य णिआर इत्यादेशः स्यात् ॥ णिआरइ ॥ काणेक्षितं करोतीत्यर्थः ॥

श्रमेरिति ॥ वावम्फइ । श्रम करोतीत्यर्थ ॥७।४५॥

३२९ अवष्टम्भे तु संदाणः निष्टम्भे णिट्ठहः स्मृतः । १०
मन्युनौष्ठस्य मालिन्यं तत्र णिव्वोल ईरितः ॥७।४६॥

अवेति ॥ सदाणइ । अवष्टम्भ करोति इत्यर्थ. ।

नीति ॥ णिट्ठहइ । निष्टम्भं करोति ॥

मन्यु इति । णिव्वोलइ । मन्युनौष्ठं मलिनं करोतीत्यर्थः ॥७।४६॥

३३० निष्पातोच्छोटयोर्णीलुंछः कम्मः क्षुरकर्मणी । १५
शैथिल्ये लम्बने वापि पयल्लः गुलल्लश्चटौ ॥७।४७॥

निष्पेति । णीलुछइ । निष्पातनमुच्छोटनं वा करोतीत्यर्थ ॥

कम्मति । क्षुरसाध्ये कर्मणि वर्तमानस्य कृञ. कम्म. स्यात् । कम्मइ । क्षुरकर्म करोति ।

शैथिल्येति । पयल्लइ । शैथिल्य लम्बनं वा करोतीत्यर्थः ॥ २०

गुलेति । चटु-चाटु प्रिये वाक्ये । तत्र विषये कृञोय स्यात् । गुलल्लइ ॥ चाटु करोतीत्यर्थः ॥७।४७॥

३३१ स्मरतेः स्युर्झरो झूरो भर-विम्हर-पम्हराः ॥
भलो लढश्च सुमरः पयरश्च सरो दश ॥७।४८॥

स्मरेति ॥ झरइ । झूरइ । भरइ । विम्हरइ । पम्हरइ । भलइ । लढइ । २५ सुमरइ । पयरइ । सरइ ॥७।४८॥

३३२ विस्मरेर्विसरः पम्हुसश्च विम्हर-वीसरौ ॥
कोक्कपोक्कौ व्याहरतेः पचेः सोल्लः पउल्ल च ।७।४९॥

विस्मेति । विपूर्वस्य स्मरतेरेते चत्वार. स्युः ॥ विसरइ । पम्हुसइ । विम्हरइ । वीसरइ ॥ ३०

कोक्क इति । कोक्कइ । पोक्कइ । पक्षे वाहरइ ॥

पचेरिति । सोल्लइ । पउल्लइ । पक्षे पचइ ॥७१४६॥

३३३ पयल्लोवेल्लौ प्रसरेर्गन्धे महमहस्तु वा ।
णिःसरेर्णीहरो णीलो वरहाडश्च धाड च ॥७५०॥

पयेति । पयल्लइ । उवेल्लइ । पक्षे पसरइ ॥

५ गन्धेति । गन्धविषयस्य प्रसरे महमह इत्यादेशः स्यात् ॥

महमहइ मालई ॥ पक्षे पसरइ मालईगंधो ॥ गन्धे किम् । पसरइ धूमो ॥

निःसरेति ॥ णीहरइ । णीलइ । वरहाडइ । धाडइ ॥ पक्षे णीसरइ ॥७५०॥

३३४ जाग्रेर्जग्गः व्याप्रियतेराअड्डः पच्छ पृच्छतेः ।
संवृणोतेस्तु साहट्टः साहरः संवरस्तथा ॥७५१॥

१० जाग्रेति ॥ जग्गइ । पक्षे जागरइ ॥

व्याप्रीति ॥ आअड्डइ ॥ वावरेइ ॥

पुच्छेति । पुच्छइ ॥

संवृ इति ॥ साहट्टइ । साहरइ ॥ सवरइ ॥७५१॥

३३५ थक्कः फक्केः प्रहरतेः सारः सन्नाम आदृङः ।
१५ सिंचसिंपौ सिञ्चतेश्चावातरेरारोह-ओरसौ ॥७५२॥

थक्केति ॥ थक्कइ ॥

प्रेति ॥ सारइ । पक्ष पहरइ ॥

सन्नेति ॥ सनामइ । पक्षे आदरइ ॥

सिञ्चेति । सिंचइ । सिंपइ । पक्षे सेअइ [सिञ्चति] ॥

२० अवेति । ओहइ । ओरसइ । पक्षे ओअरइ [= अवतरति] ॥७५२॥

३३६ शकेश्चयस्तीरः पारः सक्क इतीरिताः ॥
त्यजेरपि चयः पारेरपि पारस्तरेस्तरः ॥७५३॥

शकेरिति ॥ चयइ । तीरइ ॥ पारइ । सक्कइ ॥

त्यजेरिति ॥ एषामेते सामान्यप्रक्रियासिद्धा ज्ञातव्या इति व्युत्पा-
२५ द्यन्ते ॥७५३॥

३३७ श्लाघतेः सलहो गर्जेर्बुक्को ढिक्को वृषारवे ॥
मुञ्चेश्च छड्डोवहेडश्च मेल्ल-उस्सिक्क-रेअवौ ॥७५४॥

३३८ णिलुंछ-धंसाड मुञ्च सम दुःखे तु णिव्वलः ॥
वेहवोवेलवो जूरवश्चोमच्छश्च वञ्चतेः ॥७५५॥

३० श्लाघेति । सलहइ । पक्षे सलाहइ ॥

गर्जेरिति ॥ गज्जइ । बुक्कइ ॥

ढिक्केति ॥ वृषभगर्जिते ढिक्क इत्यादेशः

ढिक्कइ । वृषभो गर्जति इत्यर्थः ॥

मुञ्चेरिति ॥ छड्डइ । अवहेडइ ॥ मेल्लइ । उस्सिक्कइ । रेअवइ ॥७।५४॥

णिल्लुञ्छइ । धंसाडइ । मुअइ ॥

दुःखेति ॥ दुःखविषयस्य मुञ्चते णिव्वलः स्यात् ॥ णिव्वलइ = दुःखं मुञ्चतीत्यर्थः ॥ ५

वेहेति ॥ वेहवइ ॥ वेलवइ ॥ जूरवइ ॥ उमच्छइ ॥ पक्षे वंचइ ॥७।५५॥

३३९ रचतेर्विडविड्डश्च ऊगाहश्चावहस्तथा ॥
उवहत्थः सारवश्च समारः केलअस्तथा ॥७।५६॥

३४० समारचेर्भवन्त्येते वद्धर्वड्ढो वृधेर्वढः ।
अग्घः छज्जः सहो रीरो रेहो राअश्च राजतेः ॥७।५७॥ १०

रचेति । विडविड्डइ ॥ ऊगाहइ । अवहइ । पक्षे रएइ ॥

उवहत्थेति । उवहत्थइ । सारवइ । केलअइ । समारइ ॥ पक्षे समारअइ ॥

वर्द्धेरिति । वड्डइ ।

वृधेरिति । वढइ ॥ १५

अग्घेति । अग्घइ । छज्जइ । सहइ । रेहइ । रीरइ । राअइ ॥७।५७॥

३४१ मज्जेर्णिउड्ड आउड्डो वुड्डः खुप्पश्च मज्जवत् ।
जीहो लज्जतेः पुञ्जेर्वमालो आरोल इत्यपि ॥७।५८॥

मज्जेरिति । णिउड्डइ । आउड्डइ । वुड्डइ । खुप्पइ ॥ मज्जइ ।

जीहेति । जीहइ । लज्जइ ॥ २०

पुञ्जेरिति । वमालइ । आरोलइ । पुंजइ ॥७।५८॥

३४२ तिजेरोसुक्क इति च पडिअग्गोप्यनुव्रजेः ॥
मृजेस्तु उग्घुसो लुञ्छः पुंछः पुंसः पुसः फुसः ॥७।५९॥

३४३ लुहो हुलश्च रोसाणो मिज्जश्चेति दश स्मृताः ॥
भञ्जेस्तु वेमयः सूरः सूडो मूरश्च नीरजः ॥७।६०॥ २५

३४४ मुसुमूरः करंजश्च पविरंजो विरस्तथा ।
अर्जतेर्विढवो जुंज-जुज्ज-जुप्पा युजेः स्मृताः ॥७।६१॥

तिजेरिति ॥ ओसुक्कइ । तेअइ ॥

पडीति । पडिअग्गइ । अणुवच्चइ । [ = अनुव्रजति ] ॥

मृजेरिति ॥ मृजेः एते आदेशा स्युः । उग्घुसइ । लुंछइ । पुसइ । पुंसइ । ३०
पुंछइ । फुसइ । लुहइ । हुलइ । रोसाणइ । मिज्जइ ॥

भञ्जेरिति । वेमयइ । सूरइ । सूडइ । मूरइ । नीरजइ । मुसुमूरइ । करंजइ । पविरंजइ । विरइ ॥

आर्जेरिति ॥ विढवइ । पक्षे अज्जइ ॥

युञ्जेति । जुजइ । जुज्जइ । जुप्पइ ॥६।६१॥

५ ३४५ भुजोर्भुञ्जो जिमो जेमः समाणः कम्म अण्हश्च ॥
चड्डश्च चमढश्चापि वोपभुञ्जेस्तु कम्मवः ॥७।६२॥

भुजेरिति । भुजइ ॥ जेमइ । जिमइ । समाणइ । कम्मइ । अण्हइ । चड्डइ । चमढइ ॥

वोपेति । भुञ्जेरिति आगन्तुकेनोकारेण निर्दिशति ॥ उपपूर्वस्य भुञ्जते-
१० कम्मव इत्यादेश स्याद्वा ॥ कम्मवइ । उवहुजइ ॥७।३२॥

३४६ घटेर्गढः सपरस्य गलो हासे स्फुटेर्मुरः ।
मण्डेस्तु चिंचअश्चिचश्चिचिल्लो रीड इत्यपि ॥७।६३॥

३४७ टिविडिकश्च मन्थेस्तु विरोलो घुसलस्तथा ।
तुडेस्तु तोडस्तुट्टश्च खुट्टश्चापि खुडोक्खुडौ ॥७।६४॥

१५ ३४८ णिलुक्कोल्लुक्क लुक्काश्च उल्लूरश्चापि वा नव ॥
घूर्णेर्घोलो घुलोघुम्मः पहल्लो घुण्ण इत्यपि ॥७।६५॥

घटेरिति । गढइ । घडइ ॥

समिति । सम्-परस्य घटेर्गल स्याद्वा ॥ सगलइ । संघडइ ॥

हासेति ॥ हासे करणतया विवक्षिते स्फुटेर्मुर इति स्याद्वा ॥ मुरइ । हासेन
२० स्फुटतीत्यर्थ ॥

मण्डेरिति ॥ चिंचअइ । चिंचइ । चिंचिल्लइ ॥ रीडइ । टिविडिक्कइ ॥ मडइ ॥

मन्थेरिति ॥ विरोलइ । घुसलइ । पक्षे मथइ ॥

तुडेरिति ॥ तोडइ । तुट्टइ । खुट्टइ । खुडइ । उक्खुडइ । णिलुक्कइ ।
२५ उल्लुक्कइ । लुक्कइ । उल्लूरइ ॥ पक्षे तुडइ ॥

घूर्णेरिति ॥ घूर्णतेरेते चत्वार स्युः ॥ घोलइ । घुलइ । घुम्मइ । पहल्लइ । घुण्णइ ॥७।६५॥

३४९ ढंसस्तु विवृतेरट्टः कढश्च क्वथतेर्भवेत् ।
ग्रन्थेर्गंठोवश्रच्छो ह्लादे णुमज्जो निषीदतेः ॥७।६६॥

३० ढसेति । विपूर्वस्य वृत्तेः ढस इति स्यात् ॥ ढसइ । विवट्टइ ॥

अट्ट इति ॥ अट्टइ । कढइ ॥

ग्रन्थेरिति । गंठइ । गंठी ॥

अवेति ॥ अवअच्छइ । छादते छादयति च ण्यन्ताण्यन्तयोः स्वतन्त्रेण निर्देशात् ॥

णु इति ॥ अत्ता एत्थ णुमज्जइ = [ श्वश्रूरत्र निषीदति ] ॥६।६६॥

३५० छिदेर्दुहाव-णिच्छल्ल-लूर-णिल्लूर-णिव्वराः ॥
णिज्झोडश्चाप्याच्छिदेस्त्वोअंद-उद्दाल इत्यपि ॥७।६७॥

छिदेरिति ॥ दुहावइ । णिच्छल्लइ । लूरइ । णिल्लूरइ । णिव्वरइ । णिज्झोडइ ॥

आच्छिदेरिति । आङ्पूर्वस्य छिदेरेतौ वा स्त ॥ ओअंदइ । उद्दालइ । पक्षे आच्छिंदइ ॥७।६७॥

३५१ मृदेर्मलो मढो मड्डुश्चड्डुः पन्नाड इत्यपि ।
खड्डुश्च परिहट्टश्च स्पन्देश्चुलुचुलस्तथा ॥७।६८॥

मृदेरिति ॥ मलइ । मढइ । मड्डुइ । चड्डुइ । पन्नाडइ । खड्डुइ । परिहट्टइ । पक्षे । मड्डुइ ॥

स्पन्देरिति ॥ चुलुचुलइ ॥ फंदइ ॥७।६८॥

३५२ निष्पद्यतेर्णिव्वलः स्याच्छदेस्तु झडपक्खडौ ।
विसंवदेर्विअट्टः स्याद्विलोट्टः फंस इत्यपि ॥७।६९॥

निष्पेति । णिव्वलइ । णिप्फज्जइ ॥ [ शदेरिति । झडइ । पक्खडइ ] ॥

विसमिति । विअट्टइ । विलोट्टइ । फसइ । विसवअइ ॥७।६९॥

३५३ खिदेर्जूर-विसूरौ च आक्रन्देर्णीहरोपि च ॥
क्रुधेस्तु जूरः कुज्झश्च रुधेरुत्थभ इत्यपि ॥७।७०॥

खिदेरिति ॥ जूरइ । विसूरइ ॥

आक्रन्देति ॥ णीहरइ । अक्कंदइ ॥

क्रुधेरिति ॥ जूरइ । कुज्झइ ॥ रुधेरिति । उत्थभइ । रुधइ ॥७।७०॥

३५४ हक्को निषेधेर्जाजम्मौ जनेः थिप्पस्तु तृप्यतेः ॥
तनोतेस्तु विरल्लः स्यात्तडस्तड्डुश्च तड्डुवः ॥७।७१॥

हक्को इति ॥ हक्कइ । निसहइ ॥

जा इति । जाअइ । जम्मइ ॥

थिप्पेति । थिप्पइ ॥

तनोतेरिति ॥ विरल्लइ । तडइ । तड्डुइ । तड्डुवइ । तणइ ॥७।७१॥

३५५ उपसर्प्पेरल्लिअः स्यात् सन्तपेर्झंख इत्यपि ।
समाप्नोतेः समाणः स्याद् व्यापेस्त्वोअग्ग इत्यपि ॥७।७२॥

उपेति । अहिलअइ ॥ उवसप्पइ ॥

सन्त इति । झंखइ । संतप्पइ ॥

समा इति ॥ समाणइ । समावेइ ॥

व्यापेरिति ॥ ओअग्गइ । वावेइ ॥७।७२॥

५ ३५६ क्षिपेर्गलत्थः सोल्लश्च पेल्लो णोल्लश्छुहो हुलः ॥
अडक्खश्च परीघत्तः खिव इत्यमी दश ॥७।७३॥

क्षिपेरिति ॥ गलत्थइ । सोल्लइ । पेल्लइ । णोल्लइ । ह्रस्वत्वपक्षे णुल्लइ । छुहइ । हुलइ । अडक्खइ ॥ परीइघत्तइ । खिवइ ॥७।७३॥

३५७ उत्क्षिपेर्गुलगुंछश्च उत्थंघोल्लत्थ-हक्खुपाः ।
१० उब्भुत्तश्च उसिक्कश्च उक्खिवश्चेति कीर्तिताः ॥७।७४॥

उत्क्षिपेरिति । गुलगुंछइ । उत्थंघइ । उल्लत्थइ । हक्खुपइ । उब्भुत्तइ ॥ उसिक्कइ ॥ उक्खिवइ ॥७।७४॥

३५८ स्वपेर्लिसः कमवसो लोट्टः सुव इतीरिताः ।।
वेपेरायंव-आयज्झा आक्षिपेर्णीरवः स्मृतः ॥७।७५॥

१५ स्वपेरिति ॥ लिसइ । कमवसइ । लोट्टइ । सुवइ ॥

वेपेरिति ॥ आयंवइ । आयज्झइ ॥ वेवइ ॥

आक्षीति ॥ णीरवइ ॥ अक्खिवइ ॥७।७५॥

३५९ लिपेर्लिंपो विलपतेर्झंखो वडवडस्तथा ।।
णयन्तोवहः कृपयतेर्गुप्यतेस्तु विरो णडः ॥७।७६॥

२० लिपेरिति । लिंपइ ॥

विलपेति ॥ झंखइ । वडवडइ । विलवइ ॥

णयन्तो इति ॥ कृपा शब्दस्य करोत्यर्थविहितस्य णयन्तस्य णयन्त अवह इत्यादेशः स्यात् ॥ अवहावेइ । कृपां करोतीत्यर्थ ॥

गुप्येति ॥ गुप व्याकुलत्वे इति दैवादिकस्यैतौ स्त । विरइ । णडइ । २५ गुप्पइ ॥७।७६॥

३६० प्रदीपेस्तेअवः संधुक्कश्चाब्भुत्तश्च संदुमः ।
लुभेः संभाव इत्युक्तः क्षुभेः खउर-पड्डुहौ ॥७।७७॥

प्रदीपेति । तेअवइ । संधुक्कइ । अब्भुत्तइ । संदुमइ । पलीवइ । प्रदीप्यते ।

लुभेरिति ॥ संभावइ । लुब्भइ ॥

३० क्षुभेरिति । खउरइ । पड्डुहइ । खुब्भइ ॥७।७७॥

३६१ आङो रभे रंभढवौ जृम्भेर्जंभा च वेस्तु न ।
उपालभेस्तु पच्चारो झंखो वेलव इत्यपि ॥७।७८॥

आङः परस्य रभेः रंभ-ढव इत्यादेशौ स्तः ॥ आरंभइ । आढवइ । आरहइ =
[ आरभते ] ॥

जृम्भेरिति । जभाइ । जंभअइ । जंभइ ।

वेरिति । वेरुपसर्गात्परस्य तु जृम्भेर्जंभा न स्यात् । विअंभइ मअणो
[ = विजृम्भते मदन. ] ॥ ५

उपेति ॥ पअ्रारइ । अलइ । वेलवइ । उवालहइ ॥७।७८।

३६२ भाराक्रान्तो विनमतीत्यर्थे स्यात् णिसुढो नमेः ।
छुंद-ओहाव-उत्थार आक्रमेर्विश्रमेणिवा ॥७।७९॥

भारेति । खिसुढइ ।

छुंदेति । छुदइ । ओहावइ । उत्थारइ । अक्कमइ = [ आक्रमते ] ॥ १०
विश्रमेरिति । णिवाइ पक्षे वीसमइ ॥७।७९॥

३६३ भ्रमतेः स्यात् टिरिटिल्लो ढुंढुल्लश्चापि ढंढल्लः ।
चक्कम्म-भमड-भमाडा भम्मंडश्चापि तलअंट ॥७।८०॥

३६४ रुंढो भ्रुंपो-भुम-गुम फुम फुस-ढुस-दुसपरीपराः ।
गमेस्त्वई अइच्छश्च अणुवज्जोप्यवज्जसः ॥७।८१॥ १५

३६५ उक्कुसः पच्चडः पच्छंदश्च णिम्महाणीण-णी ॥
णीलुक्कः पदअश्चाप्यवसेहोवहरस्तथा ॥७।८२॥

३६६ परिअल्लः परिअलो रंभो बोल्लस्तथैव च ॥
णिरिणासश्च णिवह अक्कुसश्चैकविंशतिः ॥७।८३॥

भ्रमतेरिति ॥ टिरिटिल्लइ । ढुंढुल्लइ । ढंढल्लइ । चक्कम्मइ । भमडइ । २०
भमाडइ । भम्मडइ । तलअटइ ॥ रुंढइ । भ्रुपइ । भुमइ । गुमइ । फुमइ ।
फुसइ । ढुसइ । दुसइ । परीइ । परइ ॥

गमेरिति । गमेरेकोनविंशतिरेते स्यु ॥ अईइ । अइच्छइ । अणुवज्जइ ।
अवज्जसइ । उक्कुसइ । पच्चडइ । पच्छंदइ । णिम्महइ । णीणइ । णीइ ॥
णीलुक्कइ । पदअइ । अवसेहइ । अवहरइ । परिअल्लइ । परिअलइ । रंभइ । २५
बोल्लइ । णिरिणासइ । णिवहइ । अक्कुसइ ॥

आहम्मइ पहम्मइ इत्यादि तु हम्म गताविस्यस्य भविष्यति । पक्षे
गच्छइ ॥७।८३॥

३६७ संगमेस्त्वभिडः प्रोक्तः आगमेस्त्वहिपच्चुअः ॥
प्रत्यागमेः पलोट्टः स्यादुम्मत्थोभ्यागमेः स्मृतः ॥७।८४॥ ३०

संगमेरिति । अभिडइ । संगच्छइ ॥

आगमेरिति । अहिपच्चुअइ । आगच्छइ ॥

प्रत्येति । पलोट्टइ । पच्चागच्छइ ॥

उन्मेति ॥ उम्मत्थइ । अब्भाअच्छइ ॥७।८४॥

३६८ पडिसा-पडिसामश्च शमेः उत्थल्ल उच्छलेः ॥

५ रमेरुब्भावसंखुड्ड-खेड्ड-मोट्टाश्च कोट्टमाः ॥

णीसरः किलकिंचश्च वेल्लाश्चेत्यष्ट कीर्तिताः ॥७।८५॥

पडिसेति ॥ पडिसाइ । पडिसामइ । समइ [ = शाम्यति ] ॥

उच्छेति ॥ उत्थल्लइ ॥ पक्षे ऊमलइ ॥

रमेरिति ॥ उब्भावइ । संखुड्डइ । खेड्डइ । मोट्टाअइ । कोट्टमइ । णीसरइ ।
१० किलकिंचइ । वेल्लइ । रमइ ॥७।८५॥

३६९ पूरेरग्घाड अग्घाव अहिरेमागुमोद्धुमाः ॥

त्वरेस्तुवरजअडौ तूरोपि स्यादिशतृषु ॥७।८६॥

पूरेरिति ॥ सन्ध्यकरणमसन्देहार्थम् ।

अग्घाडइ । अग्घावइ । अहिरेमइ । अगुमइ । उद्धुमइ । पूरइ ॥

१५ त्वरेरिति । तुवरइ । जअडइ ॥ स्यादिषु शतरि च तूर इति । तूरइ । तूरंतो ॥ पक्षे प्रागुक्तौ ॥७।८६॥

३७० तुरोपि स्यात्स्यादिवर्ज्जं विगलेः थिप्पणिट्टुहौ ।

क्षरेर्झरः खिरश्चैव पज्झरः पच्चडस्तथा ॥७।८७॥

३७१ णिच्चलो णिट्टुअश्चेव दलेर्विसट्ट इत्यपि ॥

२० भ्रंशेर्मुल्ल-चुक्क-फुट्ट-फिट्टाः फिड फुडौ तथा ॥७।८८॥

तुरोपीति । तुरिओ । तुरंतो । पक्षे प्रागुक्तौ ॥

विगेति ॥ थिप्पइ । णिट्टुहइ ॥ विगलइ ॥

क्षरेरिति ॥ झरइ । खिरइ । पज्झरइ । पच्चडइ । णिच्चलइ ॥ णिट्टुअइ । खरइ ॥

२५ दलेरिति । विसट्टइ । दलइ ॥

भ्रंशेरिति ॥ भुल्लइ । चुक्कइ । फुट्टइ ॥ फिट्टइ । फिडइ । फुडइ ॥ पक्षे भंसइ ॥७।८८॥

३७२ नशेस्तु णिरणासः स्यात् णिवहोवहरस्तथा ।

सेहोवसेहः पडिसा णस्सश्चेति प्रकीर्तिताः ॥७।८९॥

३० नशेरिति । णिरणासइ ॥ णिवहइ । अवहरइ । सेहइ । अवसेहइ । पडिसाइ । णस्सइ ॥७।८९॥

३७३ अवकासेस्तु ओवासः अप्पाहः संदिशेरपि ।
दृशेर्णिअच्छः पेच्छश्च अवअच्छः सव्ववस्तथा ॥७९०॥
३७४ वज्जोवअज्जोओअक्खो देक्खोवक्खोवअक्ख च ॥
अवआसश्च पासश्च णिआव पुलअः पुलो ॥७९१॥

अवेति । ओवासइ ॥ ५

अप्पाह इति । अप्पाहइ । संदिसइ ॥

दृशेरिति । णिअच्छइ । पेच्छइ । अवअच्छइ । सव्ववइ । वज्जइ । अवअज्जइ ॥ ओअक्खइ । देक्खइ । अवक्खइ । अवअक्खइ ॥ अवआसइ । पासइ । णिआवइ । पुलएइ । पुलोएइ ॥

णिज्झाअइ इति तु निध्यायते ॥७९१॥ १०

३७५ स्पृशतेः फरिसः फंसः फास आलुक्ख आलिहः ।
छिवः छिहश्चेति भषेर्भुक्कः प्रविशते रिअः ॥७९२॥

स्पृशेति । फरिसइ । फंसइ । फासइ । आलुक्खइ । आलिहइ । छिवइ । छिहइ ।

भषेरिति । भुक्कइ । भसइ ॥ १५

प्रविशतेरिति । रिअइ । पविसइ ॥७९२॥

३७६ म्हुसः प्राग्मृषि-मुष्णात्योः म्रक्षेश्चोप्पड इत्यपि ।
पिषेस्तु णिरिणासः स्याण्णिवह चड्डु एव च ॥७९३॥
३७७ रोंचश्च णिरिणज्जश्च पक्षे वफो बलेरपि ॥
कृषेरंचोप्यणाछश्च आइछश्च अअंछ च ॥७९४॥ २०
३७८ साअढढ कढ्ढ इति पट् अक्खोडस्त्वसिकर्षणे ॥
गवेषेर्घत्तढुंढुल्ल-ढढोलाः स्युर्गमेस च ॥७९५॥

म्हुस इति । पम्हुसइ । प्रमृशति । प्रमुष्णाति वा ॥

प्राक्किम् । मरिसइ । मूसइ ॥

म्रक्षेरिति । चोप्पडइ । मक्खइ ॥ २५

पिषेरिति ॥ णिरिणासइ । णिवहइ । चड्डुइ । रोंचइ । णिरिणज्जइ । पीसइ ।

वफो इति । वफइ । पक्षे वलइ ।

कृषेरिति । अंचइ । अणाछइ । आइछइ । अअंछइ । साअढ्ढइ । कड्ढइ । पक्षे करिसइ ॥

अक्खोडेति । खड्गविषयाकर्षणवाचिनः कृषेः अक्खोड इति स्यात् । ३०
अक्खोडइ । कोशादसिं कर्षतीत्यर्थः ।

गवेषेरिति ॥ घत्तइ । ढुंढुल्लइ । ढंढोलइ । गमेसइ । गवेसइ ॥७।९५॥

३७९ श्लिषेः सामग्गावआस-परिअंताः सिलेस च ॥
काङ्क्षेराहश्चाहिलंघो वंफो वच्चो महः सिहः ॥७।९६॥

३८० विलुंपोहिलंखश्चैव ग्रंसेर्डिभो ल्हस्सतथा ॥
५ प्रतीक्षेर्विरमालः स्यात् विहीरः सामअस्तथा ॥७।९७॥

श्लिषेरिति ॥ सामग्गइ । अवआसइ ॥ परिअंतइ । सिलेसइ ॥

कांक्षेरिति ॥ आहइ । अहिलंघइ । वंफइ । वच्चइ । महइ । सिहइ । विलुपइ । अहिलखइ ।

ग्रसेरिति ॥ डिंभइ । परिल्हसइ । पससइ ।

१० प्रतीक्षेरिति ॥ विरमालइ । विहीरइ ॥ सामअइ । पक्षे पडिक्खइ ॥७।९७॥

३८१ हसेर्गुंजः तच्छ चच्छ-रंप-रंफास्तक्षतेः ।
विकसेः कोआस-वोसट्टौ वोज्ज-वज्ज-डरास्त्रसेः ॥७।९८॥

हसेरिति । गुंजइ । हसइ ॥

तक्षेति । तच्छइ । चच्छइ । रंपइ । रंफइ ।

१५ विकसेरिति । कोआसइ । वोसट्टइ । विकसइ ॥

वोज्जेति । वोज्जइ । वज्जइ । डरइ ॥७।९८॥

३८२ उल्लसेर्णिल्लसो गुंजोल्लो गुजुल्लश्च ऊसलः ॥
उसुंभः पुलअश्चापि आरोअश्चेति कीर्तिताः ॥७।९९॥

उल्लसेरिति ॥ णिल्लसइ । गुंजोल्लइ । गुजुल्लइ ॥

२० ऊसलइ । पुलअइ । आरोअइ ॥७।९९॥

३८३ पर्यस्यतेस्तु पल्हत्थः पलोट्टः पलट्टस्तथा ।
णिमो णुमो णिस्स इति न्यस्यतेश्चय ईरिताः ॥७।१००॥

पर्येति । पल्हत्थइ । पलोट्टइ । पल्लट्टइ । पक्षे पज्जसइ ॥

णिम इति ॥ णिमइ । णुमइ । णिस्सइ । न्यस्यतीत्यर्थः ॥७।१००॥

२५ ३८४ निश्वसेर्णीससो झंखो भिसो भासेर्ग्रसेर्घिसः ।
अवात्तुगाहतेर्वाहो वलग्गश्चड आरुहेः ।७।१०१॥

निश्वसेरिति । णीससइ । झंखइ ।

भिसो इति । भिसइ । भासइ [ भासते ] ॥

ग्रसेरिति । घिसइ । गसइ ॥

३० अवेति । ओवाहइ । ओगाहइ । [ = अवगाहते ] ॥

वलेति । वलग्गइ । चडइ । आरुहइ [ = आरोहति ] ॥७।१०१॥

३८५ मुहेर्गुम्मड-गुम्मौ दहेरालुंखोहिऊल च ।
ग्रहेः पंगो बलो गेण्हो निरुवारो हरस्तथा ॥७।१०१॥
३८६ अहिपच्चुअ इत्येते ॥
वचेस्तु वोदथान्त्यस्य तकारो रुदभुजमुचाम् ॥७।१०२॥

मुहेरिति । गुम्मडइ । गुम्मइ । पक्षे मुज्झइ ॥

दहेरिति । आलुंखइ । अहिऊलइ । पक्षे डहइ ।

ग्रहेरिति ॥ पंगइ । बलइ । गेण्हइ । निरुवारइ । हरइ । अहिपच्चु-
अइ ॥७।१०२॥

[ इति तिङन्तप्रकाश. ॥ ]

— o —

## अष्टमः प्रकाशः

# अथ कृदन्तप्रकाशः

३८७ क्त्वातुमुनव्ययेषु घेद्ग्रहेर्वचेस्तु वोत्।
अथान्तस्य तकारो रुद्-भुज्-मुचाम् ॥८।१॥

क्त्वा इति ॥ क्त्वादिषु परेषु ग्रहेर्घेत् इत्यादेश स्यात्। घेत्तूण। घेत्तुआण ॥

५ क्वचिन्न - गेण्हिअ।

तुम्—घेत्तुं ॥

वचेरिति ॥ क्त्वादिषु वचेर्वोत् स्यात्। वोत्तूण। वोत्तुआण [=वक्तुम्] ॥ वोत्तुं [= वक्तुम्] ॥ वोत्तव्य [वक्तव्यम्] ॥

अथेति। एषामन्त्यस्य तः स्यात् क्त्वादौ प्रत्यये परे ॥ रोत्तूण [रुदित्वा]।

१० रोत्तव्वं ॥

मोत्तूण [=मुक्त्वा] ॥ मोत्तुं [=मोक्तुम्]। मोत्तव्वं [=मोक्तव्यम्] ॥ भोत्तूण [=भुक्त्वा] मोत्तुं ॥ मोत्तव्वं ॥८।१॥

३८८ दृशेः क्त्वादितकारेण सह दट्ठ इतीष्यते।
क्त्वायाः स्युस्तु तु-तूण तु-आणोत्ता यथागमम् ॥८।२॥

१५ दृशेरिति। दट्ठूण। दट्ठुआण। [= दृष्ट्वा]। दट्ठुं [=द्रष्टुम्]। दट्ठव्वं [= द्रष्टव्यम्]॥ भूतभविष्यत्-क्त्वातव्यतुमुसु का इति कृञ आदेश। काऊण। काअव्वं। काउं [= कृत्वा। कर्तव्यम्। कर्तुम्]। धातोरत इदेव स्याल्लुट्लृट्-क्त्वा-तव्य-तुमुसु तु इतीत्वमेत्वं च ॥ हसिऊण। हसेऊण ॥ हसिअव्व। हसेअव्व ॥ हसिउं। हसेउं ॥ [=हसित्वा। हसितव्यम्। हसितुम्]॥

२० अतः किम्। काऊण। होऊण ॥ [= कृत्वा। भूत्वा]।

क्त्वाया इति। क्त्वा-प्रत्ययस्यैते षडादेशा यथाप्रयोग स्यु। अत्—भमित्वा= भमिअ। रमिअ ॥ वंदिअ= वन्दित्वा। तुम्-वन्दितु। [द्रष्टुम् =] दट्ठुं ॥ भोत्तु [=भोक्तुम्] ॥ तूण—घेत्तूण [गृहीत्वा]। काऊण [=कृत्वा]। तुआण-भोत्तुआण [भुक्त्वा]। सोउआण ॥ इत्ता-वदित्ता। भमित्ता [= भ्रमित्वा] ॥ क्त्तू इति

२५ त्वार्थं ॥ ॥८।२॥

३८९ कृद्यस्य जो द्विरुक्तो वा आणिज्जं वा अणीअरः ।
शत्रानशोस्तु न्तमाणौ ई च पक्षे स्त्रियान्तयोः ॥८।३॥

कृद्यस्येति । कृत्प्रत्ययस्य संबन्धिनो यकारस्य द्विर्भूतो ज इत्यादेश· स्यात् । पेया=पेज्जा ॥ पेआ ॥ सेज्जा । सेआ ॥

अणीति । भावकर्मणोरनीयर् विहितस्तस्य अणिज्ज इत्यादेश· स्यात् । करणिज्जं । करणीअं [= करणीयम् ] ॥ संभरणिज्जं । संभरणीअं [ संभरणीयम् ] ।

शत्रेति ॥ अनयोरेतौ प्रत्येक स्त· ॥ हसन्तो । हसमाणो [ =हसन् ] ॥ वेवन्तो । वेपमाणो [=वेपमान ] ॥

ई चेति । स्त्रियां वर्तमानयो शत्रानशो स्थाने पक्षे ईत्वं च स्यात् । पक्षे न्त-माणौ च ॥ हसई । हसन्ती । हसमाणी । [=हसन्ती ] ॥ वेवई । वेवन्ती । वेवमाणी [ =वेपमाना ] ॥

आर्षापौ बहुलम् ॥ इतीप् ॥८।३॥

३९० तृनर्थप्रत्ययस्येरः क्ते तु स्यादत इत् क्वचित् ।
क्तान्तेषु दत्तादिषु तु दिण्णाद्याः स्युर्निपातनात् ॥८।४॥

तृनेति । तच्छील तद्धर्म-तत्साधुकारिषु तृन् विहितः । तत्समानार्थानां प्रत्ययानामिर· स्यात् ॥ हसनशील हसिरो । [ लज्जाशील ] लज्जिरो ॥ जम्पिरो [=जल्पक ] । [ नम्र ]= णमिरो । [ कम्र ]= [कमिरो ] ॥

क्ते इति ॥ हसिअं । पढिअ । लविअं ।

हासिअ । पाढिअ ॥

क्वचित् किम् । गअ [ = गतम् ] । णअ [ = नतम् ] ॥

अत किम् । झाअ [ = ध्यातम् ] । लूअं । भूअ ॥ क्ते तु इरपि । अणुहूअ [ अनुभूतम् ॥

क्तान्तेषु इति । दत्तं दिण्णं । छीणं । झीणं [ = क्षीणम् ] । रुदितम् = रुण्णं । जीर्णम् = जिण्णं ॥८।४॥

तथाहि

३९१ आक्रान्तेस्त्वप्पुण्णो वोलीणोतिक्रान्तः स्फुटं फुडं ॥
स्यादुत्कृष्टन्तु उक्कोस्स निसुट्ठं त निपातितम् ॥८।५॥

३९२ स्याद् वोसट्ट विकसितं विढत्तं त्वर्जितं स्मृतम् ॥
पम्हुट्ठोपि प्रमृष्टे स्यात् स्थापितं णिमिअं स्मृतम् ॥८।६॥

३९३ आस्वादितं चक्खिअं स्यात् हेषे हीसमणं मतम् ।
स्यात्पल्हत्थं पर्यस्त पल्लोट्टं च तथाविधम् ॥८।७॥

२९४ जर्ढं त्यक्तं क्षुण्णं लूनमित्याद्यूह्यं प्रयोगतः ॥
अनेकार्थ्यात्तु धातूनां योज्या अर्थान्तरेष्वपि ॥८।८॥

आक्रान्तेत्यादि स्पष्टम् । अप्पुणो = आक्रान्त. ॥

अनेकेति । यथा कलि. संख्याने पठित । कलह् ज्ञापनेपि वर्तते ॥ रिग्गिर्गतौ
५ प्रवेशेपि वर्तते ॥ कांक्षेर्वंफ आदेशः खादनेपि वर्तते ॥ इत्यादि ॥८।८॥

॥ इति कृदन्तप्रकाशः ॥

[ इति अष्टम. प्रकाशः ]

—०:—

अथ

# विविध-भाषा-संज्ञकः

## नवमः प्रकाशः

३९५ सैषा भाषातिमृद्वङ्गी महाराष्ट्राश्रया मया ।
लक्षिता सर्वभाषाणां बीजं शृङ्गारजीवितम् ॥९।१॥

३९६ शौरसेन्यामयुक्तस्य तस्य दोनादिवर्तिनः ॥
क्वचिद्योगनिमित्तस्यापि वा त्वादेरपि तावति ॥९।२॥

[शौरेति] शौरसेन्यां भाषायामसंयुक्तस्यानादेस्तस्य दः स्यात् ॥ क ग च इति 5
लोपापवादः ॥ तदो पूरिदपदिण्णेण मारुदिणा मंतिदो एदु एदु भवं [ = तत
पूरितप्रतिज्ञेन मारुतिना मन्त्रित आगच्छतु आगच्छतु भवान् । ] ॥

अयुक्तस्य किम् । हला सउंतले [=शकुन्तले] ॥ संतावेइ [=सन्तापयति] ॥

अनादे किम् । तेण तधा भणिअं = [ तेन तथा भणितम् ] ॥

क्वचिदिति । संयोगान्तिमस्यापि तस्य क्वचिद्दत्वं स्यात् शौरसेन्यामित्या- १०
प्रकरणान्तमनुसन्धेयम् ॥ महंदो । णिच्चिंदो । अंदेउरं [ = महान्तः । निश्चिन्तः ।
अन्तःपुरम् ] ।

वा त्वादेरिति ॥ तावच्छब्दे त्वादेरपि तस्य दत्व वा स्यात् ॥ दाव । ताव
[ = तावत् ] ॥९।२॥

३९७ भगवद्भवदादीना सौ नकारस्य मो भवेत् ॥ १५
धौ तु वा मो न-मात्रस्य नेन्नन्तस्य आ तु वा ॥९।३॥

भवेति । एदु भव [ आगच्छतु भवान् ] । भअव कुसुमाउहो [ = भगवान्
कुसुमायुध. ] । मघव पागसासणो [ मघवा पाकशासन ] ॥

धौ इति । संबुद्धिरूपे सौ तु परे भवदाद्यन्यसम्बन्धिनोपि नकारस्य मो
स्यात् । भो राअं [भो राजन् ] । भो बम्हं [=भो ब्रह्मन् ] । सुकम्मं [=सुकर्मन् ] । २०
भअवं हुतवह [ भगवन् हुतवह ] ॥

पक्षे लोपोन्त्यस्य हल इति न-लोपः ॥ भो राअ । भो बम्ह । भअव
हुदवह । इत्यादि ॥

ने इति । इन्नन्ते नकारस्य मो न स्यात् आत्वं तु वा स्यात् धौ परे ॥
भो कंचुइआ । भो तवस्सिआ । पक्षे भो कंचुइ । भो तवस्सि [= भो कञ्चुकिन् । २५
तपस्विन् ॥९।३॥

३९८ थस्य च्यो वा थस्य धो वा हस्यापीह हचोः सधा ।
भवतेहस्य भो वा स्यात् पूर्वस्य पुरवापि वा । ८।.॥

थस्येति । शय्यर्या इति योगस्य अ उक्तस्तस्यापवादः ॥ पक्षे थस्य च्यो विर्धावते शौरसेन्याम् ॥ अय्यउत्त पय्याउलीकदाम्ह [ = आर्यपुत्र पर्याकुली-
५ कृतास्मि ] ॥ सुय्यो [= सूर्यः ] । कय्यपरवचो [=कार्यपरवश.] ॥ पक्षे अज्जउत्त पज्जाकुलीकदम्हि ॥ इत्यादि ॥

थस्येति । कधेहि । कहेहि । [ = कथय ] ॥ णाधो । णाहो [ = नाथः ] ॥ राधपधो । राजपहो [ राजपथः ] ॥

अनादावित्येव । थामो [ स्थामन् ] । थेओ [ स्थेय. ] ॥

१० हस्येति । इह शब्दे ओण्मध्यमपुरुषबहुवचनादेशे हचि च स्थितस्य हस्य धो वा स्यात ॥ इध । होध । [ इह । भव ॥ परित्ताअध । पक्षे इह । होह । परित्ताअह [ = परित्रायध्वम् ] ॥

भवतेरिति । भवतोर्होहुरहवाः दिदेश्यामितरत्र हुः इत्यप्रवृत्तादेशसम्बन्धिनो हस्य भो वा स्यात् ॥ होदि । भोदि । हुवदि । भुवदि । हवदि । भवदि ॥

१५ पूर्वेति ॥ अपुरवं णाडअं [ = अपूर्वं नाटकम् ] । पक्षे अपुव्वं । ७।४॥

३९९ क्त्वायास्तु इअदूणौ वा कृञ्गमोर्डडुअः स्मृतः ।
भविष्यदर्थविहिते प्रत्यये स्मिन्न हिस्सहाः ॥८।४॥

क्त्वाया इति । भविअ । भोदूण । हविअ । होऊण । [ भूत्वा ] । रमिअ । रंदूण । । पक्षे रंतूण । रंतुआण [ रमित्वा ] इत्यादि ॥

२० कृञिति । डित्त्वाट्टिलोप । कडुअ [ = कृत्वा ] ॥ गडुअ [ = गत्वा ] ॥ पक्षे करिअ । करिदूण ॥ गच्छिअ । गच्छिदूण [ = गत्वा ] ॥

भविष्येति ॥ भविस्सिदि । करिस्सिदि ॥ [ भविष्यति । करिष्यति ॥९।५॥

४०० इदेतोः परयोर्मस्य वा णकारागमो भवेत् ।
इदानीमित्यस्य दाणीं तस्मादित्यस्य ता स्मृतः ॥८।६॥

२५ इदिति । दाणिं करेम्हि ।

तस्मादिति ॥ ता सखि सअेसु करणिज्जं [ तस्मात् सखि शय्यासु करणीयम् ] ॥।।६॥

# अथ निपाताः

४०१ एवार्थे ज्जेवं हीमाणहे इत्याश्चर्यखेदयोः ।
३० णं नन्वर्थेम्महे हर्षे हो ही विदूषकोक्तिषु ॥८।७॥

एवेति ॥ मम ज्जेव बम्हणस्स [ = ममैव ब्राह्मणस्य ]। सो ज्जेव एसो [ = स एव एषः ] ॥

हीमाणहे । ह माणहे जीवंतवच्छा मे जणणी [ = हन्त जीवद्वत्सा मम जननी ] ॥ हीमाणहे पुणोवि पुलोइस्सं [= आश्चर्यं पुनरपि प्रलोकयिष्यामि ।] ॥

णमिति । णं भणामि [ = ननु भणामि ]॥ णं भवं मे अग्गदो चलदि [ = ननु भवान् ममाग्रतश्चलति ] ॥

अम्मेति ॥ अम्महे एदाए सुम्मिलाए सुपलिगाढिदो भवं ।

हीति । विदूषकस्य वाक्येषु हर्षे द्योत्ये हीहीति निपातः । हीं ही भो संपण्णा मणोरधा पिअवअस्सस्स [ = संपन्ना मनोरथा प्रियवयस्यस्य ॥९।८॥

४०२ शेषं प्राकृतवज् ज्ञेयं मागध्यां तु निरूप्यते ॥
रस्य लः सस्य शो ग्रीष्मे संयोगाद्योः सषोस्तु सः ॥९।८॥

शेषमिति ॥ शौरसेन्यामनुक्तविषयेषु महाराष्ट्रप्रयोगेषु प्राकृतवदेव कार्यं द्रष्टव्यम् । यथा अन्तावेदी [ = अन्तर्वेदि ]। सामिद्धी [ = समृद्धिः ] ॥ वट्टदि [ = वर्तते ] ॥

मागध्यामिति ॥ रस्येति ॥ नरः = नले ॥ करः=कले ॥

सस्येति । हंसः = हंशे ॥ पुरुषः = पुलिशे ॥

अग्रीष्मेति ॥ ग्रीष्मशब्दादन्यत्र संयोगादिस्थयोः सकारषकारयोः सः स्यात् । ऊर्ध्वलोपापवादः ॥ पस्खलदि [ = प्रस्खलति ] ॥ बहस्पदी [ = बृहस्पतिः ] मस्कली [ = मस्करी ] ॥ शुस्कं [ = शुष्कम् ] ॥ कस्टं [ = कष्टम् ] ॥ णिस्फलं [ = निष्फलम् ] ॥ धनुस्खंडं [ = धनुष्खण्डम् ] ॥

ग्रीष्मे तु गिम्हआले [ = ग्रीष्मकाले ] ॥ ९।८॥

४०३ ट्ठयोः स्टः स्थर्थयोः स्तो जद्ययोर् यः न यस्य जः ।
न्यण्य-ज्ञ-ञ्जां ञ्ञो व्रजेश्च जस्य श्चक्षस्य नादितः ॥९।९॥

द्विरुक्तस्य टस्य ष्ठशब्दस्य च स्ट इति स्यात् । पस्टे = स्पष्टः ॥ भस्टिणी महिणी = ॥ सुस्टु कृतम् = शुस्टु कदं । [ कोष्ठागारं ] = कोस्टागालं ॥

स्थेति ॥ स्थ—[ उपस्थितः = ] उवस्तिदे ॥ [ सुस्थितः = ] शुस्तिदे ॥
र्थ—[ अर्थपतिः = ] अस्तवदी ॥ [ अर्थवाहः = ] अस्तवाहे ॥

जद्येति । ज—[ जानाति = ] याणादि । [ जनपदे = ] यणवदे ॥ [ अर्जुनः =] अय्युणे ॥ [ गर्जति = ] गय्यदि ॥

द्य—[ मद्यम् = ] मय्यं ॥ [ अद्य किल विद्याधर आगतः = ] अय्य किल विय्याहले आगदे ॥

येति ॥ आदेर्यो जः इति विहितो जो मागध्यां न स्यात् ॥ यदि । यथा [ = यथा ] । याण [ = यानम् ] । यवणो [ = यवनः ] ॥

न्योरिति । एषां द्विरुक्तो ञकार. स्यात् । अञ्ञदेशे = [अन्यदेशः ॥ अहिमञ्ञू [ = अभिमन्युः ] । कञ्ञका [ = कन्यका ] ॥

५ ण्य — पुञ्ञं [ = पुण्यम् ] ॥ पुञ्ञवते [ = पुण्यवन्तः ] ॥ अब्बम्हञ्ञं [ = अब्रह्मण्यम् ] ॥

ज्ञ — पञ्ञवंते [ = प्रज्ञावन्त· ] ॥ शव्वञ्ञे = [ सर्वज्ञ. ] । अवञ्ञा [ = अवज्ञा ] ॥

अञ्जली [ = अञ्जलि ] ॥ धणञ्जए [=धनञ्जय ] । पञ्जले [=पञ्जरः ] ॥

१० व्रजेरिति ॥ ञ्ज स्यात् । वञ्जदि [ = व्रजति ] ॥ श्च इति ॥ गश्च [ = गच्छ ] ॥ पिश्चिले [ = पिच्छिल. ] । तिरश्चि पेश्चदि [ = तिर्यक् प्रेक्षते ] ॥

आदीति ॥ आदौ स्थितस्य छस्य श्चो न स्यात् ॥ छाले [ =क्षार. ] । छिदइ [ = छिनत्ति ] ॥९॥९॥

४०४ क्षस्य ष्कः प्रेक्षित्याचक्ष्योः स्कः स्याच्चिष्ठस्तु तिष्ठतेः ।

१५ शेषं तु शौरसेनीवत् स्यादि-कार्यं पुरोदितम् ॥९।१०॥

क्षस्येति ॥ यक्ष = यष्के ॥ लक्ष्मण.= लष्कणे ॥

नादित इत्येव । खयजलहला [ = क्षयजलधरा. ] ॥

प्रेक्षेति ॥ पेस्कदि [ = प्रेक्षते ] । आचस्कदि [ = आचक्षते ] ॥

चिष्ठदि ॥ चिष्ठइ [ = तिष्ठति ] ॥

२० शेषमिति । मागध्या यद्विशिष्य न लक्षितं तत् शौरसेनीवत् ज्ञेयम् । यथा तस्य दः । एदे राउले [ एतत् राजकुलम् ] । भो लाअं [ = भो राजन् ] । भो कञ्चुकिआ [ = भो कञ्चुकिन् ] ॥ इत्यादि ॥

तत्राविशेषं प्राकृतवदनुवर्तत एव ।

स्यादिति ।

२५ स्यादिषु विशेषकार्यं स्यादिप्रकरण एवोक्तम् इति अत्र न निरूपणीयम् अवशिष्यत इत्यर्थः ॥९।१०॥

मागध्यामत एत्वं सौ पुंसि डाहस्तु वा ङसः ।

आमो वा ठाहँ नासिक्यः स्यादहं-वयमोर्हगे ॥

४१५ पैशाचिकेपि ज्ञो ञ्ञः स्याद् राज्ञस्तु ज्ञस्य वा चिञः ।

३० न्यण्ययोर्ञ्ञः णस्य नः तस्तु तदयोः टोस्तु वात्र तुः ॥९।११॥

पैशाचीति । मागध्यामुक्त पैशाच्यामपि स्यादित्यर्थं ॥ पञ्ञा [ = प्रज्ञा ] । सञ्ञा [ = संज्ञा ] ॥ ञ्ञाणं [ = ज्ञानम् ] ॥

राज्ञ इति । राचिआ लपितं [ = राज्ञा लपितम् ] रञ्ञा वा ॥ राचिओ धनं [ = राज्ञो धनम् ] रञ्ञो वा ॥

ज्ञस्य किम् । राजा ॥

न्येति । कञ्ञ का [ = कन्यका] ॥ अहिमञ्ञू [ = अभिमन्युः । पुञ्ञकम्मो [=पुण्यकर्मा] ॥ पुञ्ञाह [=पुण्याह.] ॥ णस्येति । गुनगनयुत्तो [=गुणगणयुक्त.] ॥ ५

तदिस्त्विति । भगवती पब्बती [=भगवती पार्वती] । दस्य—मतनो [=मदनः] । सतनं [ = सदनम् ] ॥ सोतरो [ सोदर ] । होतु [ = होदु ] ॥ रमतु [रमदु= रमताम् ] ॥ तकारस्य तकारविधानं विकारवाधनार्थम् ॥ तेन पताका वेतसो पतिपक्को इत्यादौ डत्वादि न भवति ॥

टोरिति । पैशाच्यां टुशब्दस्य तु-शब्दो वा स्यात् । कुटुम्बकम् = १० कुतुंबकं ॥९।११॥

४१६ हृदये यस्य पः प्रोक्तो यादृशादौ दृशस्तिसः ।
क्त्वायास्तु तूनः ष्ट्वाया ट्ठून-त्थून इतीष्यते ॥९।१२॥

४१७ रियो र्यस्य सिनः स्नस्य सटः ष्टस्य कचित्तु न ।
यक इय्यः कृञो डीरः देघोरेय्यो भविष्यति ॥९।१३॥ १५

हृदये इति । हितपक । हितय [=हृदयकम् । हृदयम् ] ॥

यादृशेति । यातिसो । तातिसो । भवातिसो अम्हातिसो [ यादृशस्तादृशो भवादृश अस्मादृश ] ॥

क्त्वाया इति ॥ गतून । रतून । हसितून [=गत्वा । रमि त्वा । हसित्वा ]

ष्ट्वाया इति । क्त्वाप्रत्ययसम्बन्धिन ष्ट्वाशब्दस्यैतौ स्त । तूनस्यापवाद. ॥ २० नष्ट्वा=नट्ठून । नत्थून ॥९।१२॥

रिय इति । र्यशब्दस्य रिय इत्यादेश । भार्या = भारिया ॥

सीति । [ स्नानम् = ] सिनान ।

सेति । कष्टम्=कसटं ॥

क्वेति ॥ सुञ्जो [ = सूर्य ] । सुनुसा [ = स्नुषा ] । तिट्ठो [=दृष्ट.] ॥ २५

यक इति । शय्यते = सिय्यते । दीयते = दिय्यते । रमिय्यते = रम्यते । [ पठ्यते = ] पठिय्यते ॥

कृ इति । कृञ परस्य यको डीरः स्यात् । पुधुमतंसने सब्बस्स य्येव सम्मानं कीरइ [ = प्रथमदर्शने सर्वस्यैव सम्मानं क्रियते ] ॥

दे इति ॥ भविष्यति काले विहितयो दिदे इत्येतयो. एय्य इत्यादेशः ॥ ३० हुवेय्य भविष्यति इत्यर्थं ॥९।१३॥

४१८ न कगादिप्रकाशोक्तं न वे ह् ह-ठ-दादयः ॥
नानीय-तीय-कृद्योक्तं सप्ततावपि तेर्न रिः ॥९।१४॥

नेति ॥ कगा-इत्याद्युक्तं लं पादि पैशाच्यां न स्यात् ॥ मकरकेदू [=मकरकेतुः] ॥ विजयसेनो [ = विजयसेनः ] ॥ सत्तं [ = सत्यम् ] । पापं [=पापम् ] षस्य हत्वं न [आयुधम् =] आयुधं ॥ टो डो न । नटो । भटो ॥ ठो न मठो सठो इत्यादि ॥

ना इति । अणिज्जं वा अनीयर. तीयस्य इज्जं वा कृद्यस्य जो द्विरुक्तो वा इत्यादि कार्यं पैशाच्यां न स्यात् ॥ करणीअं [=करणीयम् ] विईअं [=द्वितीयम्] पेआ [ = पेया ॥

[ सप्ततेरिति । ] सत्तती = सप्तति. । ९।१४॥

४१९ चूलिकापैशाचिके तु रस्य लत्वं विभाषया ॥
तृतीयतुर्ययोस्त्वाद्यद्वितीयौ वादिवर्तिनोः ॥९।१५॥

चूलीति ॥ नरो । नलो [ = नरः ] ॥ पुरिसो । पुलिसो [ = पुरुषः ] ॥

तृतीयेति ॥ वर्ग्ययोरेतयोरेतौ क्रमात्तः । नगरं नकर [=नगरम्] ॥ मार्गणः= मक्कनो ॥ मेघ =मेखो । व्याघ्र. = वक्खो । राजा = राचा । निर्झरः = निच्छरो । तडाग = तटाकं ॥ दामोदर = दामोतरो ॥ [ मधुरम् = ] मथुरं ॥ दाढा । दाठा [ = दंष्ट्रा ] ॥

वादीति । पदादौ ॰धिसयोरेतयोरेतौ वा स्त ॥ गिरितटं । किरितटं । [धर्मः=] धम्मो । धम्मो ॥ धूली । थूली ॥ बालको = पालको । [ जीमूतः = ] जीमूतो चीमूतो ॥९।१५॥

४२० शेषं तु पैचाचिकवत् शौरसेनीयवच्च तत् ॥
चूलिकापैशाचिके यदनुक्तं तत्पैशाचीवदुन्नेयम् ॥९।१६॥

शौरेति । पैशाचिकेऽपि यदनुक्तं तच्छौरसेनीयवदूह्यम् ॥९।१६॥

४२१ तदेवं प्राकृतं प्रायो लक्षितं लक्ष्यसम्भवम् ॥
आर्षं तु स्वल्पभेदत्वाद् बहुलोक्त्यैव लक्षितम् ॥९।१७॥

४२२ अपभ्रंशस्तु यो भेदः षष्ठः सोऽत्र न लक्ष्यते ।
देशभाषादितुल्यत्वान्नाटकादावदर्शनात् ॥९।१८॥

४२३ अनत्यन्तोपयोगाच्चातिप्रसंगभयादपि ।
एवमन्येपि ये भेदा लक्षिताः पूर्वसूरिभिः ॥९।१९॥

४२४ नेहोक्ताः किन्तु नाम्नैव कीर्त्यन्ते स्पष्टबुद्धये ।
सप्तविंशत्यपभ्रंशा वैडालादिप्रभेदतः ॥९।२०॥

४२८ काञ्चीदेशीय पाण्डये च पाञ्चालं गौडमागधम् ।
आवन्त्यं दाक्षिणात्यं च शौरसेनं च कैकयम् ॥९।२१॥
४२६ शाबरं द्राविडं चैव एकादश पिशाचजाः ।
एवमार्षमनार्षं च सङ्कीर्णं चोपजायते ॥९।२२॥
४२७ देवाना भूपतीनां च सचिवानां पुरोधसाम् ।
अमात्यवणिजादीनां पाठ्यमिच्छन्ति संस्कृतम् ॥९।२३॥
४२८ संस्कृतेनैव केप्याहुः प्राकृतेनैव केचने ।
साधारण्यादिभिः केचि केचन म्लेच्छभाषया ॥९।२४॥
४२९ न म्लेच्छितव्य यज्ञादौ स्त्रीषु ना प्राकृतं पठेत् ॥
संकीर्णं नाभिजातेषु न प्रबुद्धेषु संस्कृतम् ॥९।२५।
४३० परिव्राण्मुनिविप्राणां संस्कृतान्नान्यदिष्यते ॥
अन्येषामुत्तमानां च प्रतीपं क्वापि दृश्यते ॥९।२६॥
४३१ बालस्त्रीवृद्धवेश्यानां कितवाप्सरसां तथा ॥
वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरा ॥९।२७।
४३२ ऐश्वर्यादिप्रमत्तस्य दारिद्र्योपप्लुतस्य च ॥
उत्तमस्यापि पठतः प्राकृतं नैव दुष्यति ॥९।२८॥
४३३ क्रीडार्थं नृपतेरिष्टं प्राकृतं च द्विजन्मनाम् ।
भरतेनोदितं ग्राह्यमबाधितमिदं वचः ।९।२९॥
विशेषमाह भरद्वाज.—
४३४ गाथासु तु महाराष्ट्री अन्या नाट्याश्रया मता ।
बालस्त्रीवृद्धभिक्षूणां श्रावकाणां जलिङ्गिनाम् ॥९।३०॥
४३५ ग्रहोपसृष्टमत्तानां प्राकृतं खण्डरूपि च ।
नायिकानां सखीनां च शौरसेन्यविरोधिनी ।९।३१।
४३६ प्राच्या विदूषकादीनां धूर्तानामप्यवन्तिका ॥
मागधी राक्षसादीनामन्तःपुरनिवासिनाम् ॥९।३२॥
४३७ चेटानां राजपुत्राणां श्रेष्ठिनां चार्द्धमागधी ॥
शकाराणां तु शाकारी बाह्लीकादिन्यभाविनाम् ॥९।३३॥
४३८ योधानां भारिशादीनां शाबरी च प्रशस्यते ॥
द्राविडी द्रविडादीनामोड्री खनकरक्षमाम् ॥९।३४॥
४३९ काव्ये वैतालिकादीनां वेतालादीना मुभाषितम् ॥
किरातबर्बराजदानां न भाषा नैव लक्षणम् ॥९।३५॥

४४० तदिमां पदचन्द्रिकानुजाता
प्रगुणां प्राकृतचन्द्रिकां विदग्धाः ॥
परिशिलयचिरादपास्ततापाः
कविगोष्ठीषुविहारमातनुध्वम् ॥९।३६॥

५ ४४१ इति कृतिपरितोषप्रार्थनालम्पटेन
प्रकटितपरभागाशेषकृष्णेन सेयम् ॥
रचयतु गुरुतोषं शेषवंशावतंस
गुरुमिह नरसिंहं प्रापिता तत्पदाब्जे ॥९।३७॥

इति श्रीकृष्णपण्डितविरचिता
१० प्राकृतचन्द्रिका समाप्ता ॥

—:o:—

प्राकृतचन्द्रिकान्तःपाति-

# विशिष्टशब्दानुक्रमणिका

# शुद्धिपत्रम्

| पृष्ठे | पंक्तौ | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| १ | २ | देवें | देव |
| २ | ३१ | इत्यथ | इत्यर्थ |
| ,, | ,, | चोरस्स | चोरस्स |
| ३ | १७ | श्रय | श्रेय |
| ४ | ९ | प्रत्तय | प्रन्यय |
| ४ | १२ | एष वलि | एषा वलि |
| ४ | ३० | पदयोद्वयो | पदयोर्द्वयो' |
| ६ | २४ | अष्सर. | अप्सर |
| ६ | २५ | स्त्रीव्वात् | स्त्रीत्वात् |
| ७ | १ | ० तुग | ० तुग । |
| ७ | १२ | पराङ्ख | पराङ्मुख |
| ७ | १७ | –मूर्द्ध सु | मूर्द्ध सु |
| ७ | १८ | श्मश्रु | श्मश्रु |
| ७ | २१ | द्वितीया | द्वितीयात् |
| ७ | २८ | अतिमुत्ककम् | अविमुक्तकम् |
| ८ | २ | पुष्फ | पुप्फ |
| ८ | ३ | बाहुलकान् | बाहुलकात् |
| ८ | १९ | ग्मस्म | ग्मस्य |
| ८ | ३१ | मुक्कम् । | मुक्तम् |
| ९ | ९ | मक राणा | मकाराणा |
| ९ | १५ | विउणो | बिउणो |
| ९ | २५ | समुद्रा | समुद्रो |
| १० | १ | मधुमथन | मधुमथन |
| १० | ५ | ०चद्रं | ०चन्द्र |
| ११ | ९ | विष्वक | विष्वक् |

| पृष्ठे | पङ्क्तौ | अशुद्धिः | शुद्धि |
|---|---|---|---|
| १२ | १३ | लाअण्ण | लाअण्णं |
| १५ | १४ | वग्गोपि | वग्गोयि |
| १४ | २५ | पवर्गीयस्य | पवर्गीयस्य |
| १६ | १८ | पिसाओ | पिसाओ |
| १६ | २६ | दक्षेरिच्छो | ० दक्षे रिच्छो |
| २५ | १८ | विछड्डो | विछड्डी |
| २७ | ७ | मजरिइति | Delete |
| २८ | ११ | मुवखो | मुक्खो |
| २९ | २४ | हत्तिआरो | हलिआरो |
| ३० | २१ | ०शबृत्य | शब्दस्य |
| ३१ | ३ | वासमृद्धि- | वा समृद्धि- |
| ३१ | २१ | सय्ह्लो | सय्हो |
| ३२ | २३ | बोत्र वाते | वोत्खाते |
| ३५ | १७ | सिह्लदत्त | सिहदत्त |
| ३६ | १८ | दक्षसिहेण | दरिअसिहेण |
| ३९ | २१ | पोत्फल | पोप्फल |
| ४० | ३१ | अस्माके म्हेच्चय | अस्माकेम्हेच्चय |
| ४१ | १ | ह्लत्थुल्लो | हत्थुल्लो |
| ४३ | ३ | व्राहुलकात् | बाहुलकात् |
| ४३ | ४ | आलेष्ढुअ | आलेढुअ |
| ४७ | ७ | ह्लरे | हरे |
| ५० | २६ | Add after रामस्य | रामस्स |
| ५१ | २६ | हाहाह्लिन्तो | हाहाहिन्तो |
| ५७ | २४ | डेसिम्– | डेसिम् |
| ५८ | ५ | सर्वस्मिन् | सर्वेषाम् |
| ,, | ,, | अन्यस्मिन् | अन्येषाम् |
| ,, | ,, | यस्मिन् | येषा |
|  | १० | कस्मिन् | केषा |
| ,, | ,, | सर्वस्याम् | सर्वासाम् |
| ,, | ,, | अन्यस्याम् | अन्येषाम् |

| पृष्ठे | पंक्तौ | अशुद्धिः | शुद्धिः |
|---|---|---|---|
| ६१ | १५ | विहृते | विहिते |
| ६२ | २४ | चोनुक्र– | चोनुक्त |
| ६४ | ३० | ह्लीति | हीति |
| ६६ | ११ | ब्राह्मणा | ब्रह्माण |
| ,, | ,, | ब्राह्मणान् | ब्रह्मण |
| ,, | ,, | ब्राह्मणम् | ब्रह्माणम् |
| ६८ | २२ | दोण्ह्ल | दोण्ह |
| ७० | २१ | चउद्दहे | चउद्दह |
| ७ | २२ | सा | वावण्णासो |
| ७२ | २१ | Add after सवण | असी। |
| ७७ | १९ | भविप्यद्– | भविष्यद् |
| ८१ | २५ | ह्ललन्तत | हलन्तत |
| ८२ | २० | लोह्लिआइ | लोहिआइ |
| ८५ | २ | छुप्पइ | छुप्पइ |
| १२० | २० | ह्लोऊण | होऊण |

—•—